स रेणुकायां बहुविक्रमो भवानभूद्‌ततो वीरवरप्रसूरसौ ।
अचिन्त्यमाहुर्भवतो विचेष्टितं हिनस्ति हिंसापि न यद् द्विजव्रतम् ॥

(स. ४. श्लो. ७४)

खदिरसालरसालभृतं गिरेः सकृतमालतमालवटं तटम् ।
करिवराहवराहवसाहसक्षुभितदारु तदारुरुहुश्च ते ॥

(स. ६. श्लो. ४५)

सुप्तवाहसनिःश्वासैरुद्गीर्णविषवह्निभिः ।
गुहासु तिमिरोद्योतपर्यायोन्मेषभीषणम् ॥

(स. ७. श्लो. २२)

सैवेयं जनकात्मजेति मुमुदे शोकानलज्वालया
व्यालीढेति शुशोच रावणहृतेत्युच्चैरदप्यत् क्रुधा ।
यत्नो मे फलवानसूनजहती यद् दुर्बलानप्यसौ
संदृष्टेति समाश्वसीदिति हरिर्नानारसोऽभूत् क्षणम् ॥

(स. १२. श्लो. ६३)

अथ पृथुपटिमा प्रहस्तपुत्रः समभिजगाम रणाय जम्बुमाली ।
इह खलु नियतिर्द्वितीयपादे व्यवटयतादित एव पञ्च वर्णान् ॥

(स. १४. श्लो. ९)

हर्षाविष्टैरागतदर्पैरुपसृत्यैरुद्‌भूताङ्गैरुत्कटहिक्कारवकण्ठैः ।
उद्‌भ्रान्ताक्षैरुत्प्लवमानैर्वलमानैर्वारं वारं स प्लवगौघैः परिरेभे ॥
सीतोदन्तं साधु निशम्य त्वरमाणैरुद्धावद्भिस्ताडितभेरीपणवाद्यैः ।
साहङ्कारैरुद्धतमुत्पुच्छयमानैरन्वीतस्तैरम्बुधितीरान्न्यवृतत् सः ॥
मध्येवर्त्म मत्तमयूरीरवरम्यं संरुद्धार्कं सत्फलपुष्पैस्तरुसङ्घैः ।
उत्कूलापैः कूपतटाकैरुपपन्नं मार्गश्रान्ताः स्फीतमरण्यं ददृशुस्ते ॥

(स. १४. श्लो. ६८-७०)

स्मृतावपि त्रिजगति पुण्यहेतवे निशाचरक्षयकरधूमकेतवे ।
परिस्फुरत्कनकविचित्रधातवे सुरा नतिं व्यधिषत रामसेतवे ॥
अथामुना हरिकुलहर्षनिस्वनप्रतिस्वनत्कुलगिरिकुञ्जकुञ्जरे ।
शुभे क्षणे जयकरभूरिलक्षणे प्रयातवानरिविजयाय राघवः ॥
कराञ्चितभ्रमितगदो विभीषणः पुरस्सरः सरणिमुपादिशत् प्रभोः ।
सहोदरः सवितृसुतश्च पार्श्वयोर्विचेरतुर्विपुलमुदावुदायुधौ ॥
हनूमदङ्गदनलनीलजाम्बवत्सुषेणकेसरिशरभादियूथपम् ।
अधस्तनं कतिपययैव सङ्ख्यया परार्धतः प्लवगबलं समन्ततः ॥
करोद्‌धृतक्षितिधरपादपायुधं मदोद्धतप्रतिभयनादमेदुरम् ।
समुच्छ्रितैरनलपिशङ्गलोचनैस्तदानशे दिवमपि भीषणैर्मुखैः ॥

(स. १५. श्लो. ४९-५३)

शरदिजशशिज्योत्स्नागौरैश्चलत्कलशाम्बुधि-
प्रचुरलहरीपालीकेलीविलङ्घनजाङ्घिकैः ।
हिमगिरिशिरस्स्वङ्गद्गङ्गातरङ्गसखैर्दिशो
दश दशरथापत्यं राजा यशोभिरशोभयत् ॥

परिणुतगुणो भव्यैर्दिव्यैरशेषनिशाचर-
क्षपणजनितक्षेमप्रेमप्रसक्ततरङ्गितैः ।
नखलु पृथिवीमात्रं पात्रं श्रियः समरञ्जयत्
त्रिभुवनमपि स्वैरासेव्यः सतां रघुनन्दनः ॥

(स० २०. श्लो० ८९, ९० )

This edition is prepared from a single ms. T. U. O. M. L.1746 with sundry help from No. 1748 which is a commentary of one part of the work by the author himself. These two mss. were obtained from Mr. Nārāyaṇan Nārāyaṇan of Vempanāṭṭu Illom in Ampalapuzha Taluq. The commentary, unfortunately, covers only one part of the kāvya and we have had no other ms. to compare readings with.

I take this opportunity to record my thanks to Pandit Mr. E. V. Rāman Nampūri who spared no pains to collect various items of information regarding the author, and to Pandit Mr. N. Rama Śastri who was in charge of the proofs. The bulk of the matter had been printed before it came into the hands of the University. A longer list of errata than usual has been found necessary and I crave the indulgence of readers in this matter. With these remarks I place this, the first work of a Kerala poet issued by this University, before the public.

Trivandrum,
12th Sept. 1941.

L. A. Ravi Varma,
*Hon. Dir. T. U. O. M. Library.*

---

# शुद्धिपत्रिका ।

| पृष्ठम्. | श्लोकः. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ५ | ३२ | सुरवैरिणोऽपि येः | सुरवैरिणोऽपि ये |
| ७ | ४५ | निशाचरध्वान्त | निशाचरध्वान्त |
| ८ | ५२ | विधेरिव। | विधोरिवा |
| १२ | १२ | पुत्रकाम्यान्त | पुत्रकाम्यन्त |
| १४ | ३३ | मृगिकुलानि | मृगीकुलानि |
| २२ | ७३ | निष्क्रियः | निष्कयः |
| २४ | ६ | गधि | गाधि |
| २५ | १५ | श्रती | श्रुती |
| ,, | १६ | सना | शरासना |
| ३२ | ६७ | जगाद | ञ्जगाद |
| ३५ | ८२ | सनामिभिः | सनाभिभिः |
| ३७ | २४ | वीरुदारुणित | वीरुदाराणित |
| ,, | ,, | नगरीति | नगरीतिः |
| ४४ | ५ | पुष्करणी | पुष्करिणी |
| ४६ | २२ | रसद्भिरनोकहाः | रसद्भिरनोकहाः |
| ५८ | ६२ | विजिताल्लोंकान् | विजिताल्लोँकान् |
| ६६ | ४२ | शयनानिशिलाः | शयनानि शिलाः |
| ६८ | ५३ | मभिपेदुषी | मभिपेतुषी |
| ७२ | ९ | धिमाचम्य | धिमाचाम |
| ,, | १८ | आराल | अराल |
| ७३ | ३२ | विजृम्भृ | विजृम्भ |
| ,, | ३४ | मृगादिबाधूत | मृगादिवाधूत |
| ७४ | ४६ | पान्थाः | पान्था (:?) |
| ७५ | ५३ | खङ्गाहि | खड्गाहि |
| ,, | ,, | श्रयं | श्रियं |

| पृष्ठम्. | श्लोकः. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ७५ | ५६ | व्यवस्थिता | व्यवास्थिता |
| ,, | ५८ | रथेनो | रथेनो |
| ७९ | ९ | तामविन्येष | तामन्वियेष |
| ८० | २३ | स्वार्थसिद्धैः | स्वार्थसिद्धये |
| ,, | २४ | अश्मेवाह्वां | अश्मेवाह्वां |
| ८१ | ४३ | तस्मिन्नचुपि | तस्मिन्नूचिषि |
| ८२ | ५२ | पर्यलब्ध | पर्यरब्ध |
| ,, | ५३ | अङ्गादङ्गदन्तरे | अङ्गादङ्गादन्तरे |
| ,, | ५४ | नास्तिभीरत्र | नास्ति भीरत्र |
| ,, | ५६ | दीन | दीने |
| ८३ | ६८ | घूर्णिताणोंधि | घूर्णिताणोंधि |
| ९६ | २९ | श्वावादी | श्वावादी |
| ९७ | ३१ | ुत्री | पुत्री |
| १०२ | ५ | चूतादिकं | चूतादिकं |
| ११२ | २७ | तदनुपेत्य | तदनुपत्य |
| ११५ | ४९ | विभणि | विभणि |
| ११६ | ५४ | दतोनु | दतोऽनु |
| ११८ | ६६ | प्रकर्ष | प्रहर्ष |
| १२६ | ४६ | तिष्ठ स | तिष्ठस |
| १२८ | ६४ | विमता | विमता |
| १३७ | ४५ | स्वनियम | स्वनियम |
| १४१ | २ | वृद्धा | विद्धा |
| ,, | ६७ | लक्ष्मणसखा | लक्ष्मणसखो |
| १४४ | ४६ | व्योमपरागपूरैः | व्योम परागपूरैः |
| १५४ | ४५ | शत्रुवक्रा | शत्रुवक्त्रा |
| १५७ | ७१ | खङ्गेन | खड्गेन |
| १५९ | ८२ | व्याप्त | व्याप्ता |

| पुटम्. | श्लोकः | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ६ | ३९ | वार्तीभि | वर्तिभि |
| १६ | ६४ | मिब | मिव |
| २४ | ७ | तैत्तरीयाणि | तैत्तिरीयाणि |
| २५ | १७ | कृर्तोथमीस्म | कृतार्थमस्मि |
| २८ | ३३ | चकार । | चकार सः । |
| ३६ | १४ | श्रयिताः स्मः | श्रयितास्मः |
| ४७ | ३० | खलदारुण | ख(लः॒लु) दारुण |
| ७६ | ६१ | रोत्क्षित | रोक्षित |
| ९२ | ३ | विदीर्णे | विदीर्णे |
| १०० | ४९ | घर्म | घर्म |
| ११३ | ३० | रंनिल | रनल |
| ११५ | ४९ | रलङ्कितस्मृ | रलङ्कित(ः) स्मृ |
| ११६ | ५५ | प्रदाही- | प्रदाही |
| १४० | ६२ | सङ्ख्या | सङ्ख्या- |
| १४४ | ४३ | व्योमपराग | व्योम पराग |
| १५७ | ६७ | आजहे | आजह्रे |
| १६१ | १३ | त्रिभुवनं | त्रिभुवने |
| १७२ | ८ | त्रावसु | त्रावसु |
| १८० | ८६ | ानशिच | निशिच |

॥ श्रीः ॥

श्रीमद्रामपाणिवादविरचितं

# राघवीयम् ।

## प्रथमः सर्गः ।

श्रियः प्रसूतिर्मनुवंशजन्मना-
मभूदयोध्येति पुरी महीभुजाम् ।
स तां भुनक्ति स्म सतां पुरःसरो
महारथः पङ्क्तिरथाह्वयो नृपः ॥ १ ॥

अनल्पकल्पद्रुमराजिराजिते
सुवर्णकल्हारसुगन्धिमारुते ।
विशश्रमे यस्य दिगन्तधाविना
यशोमरालेन सुरापगातटे ॥ २ ॥

अमित्रभूपालनतभ्रुवां हृदि
ज्वलन् भुजोष्मा खलु यस्य दुःसहः ।
अशोषयन्नेत्रजलोक्षितामपि
स्तनस्थलीराजिषु पत्रवल्लरीम् ॥ ३ ॥

अशेषराजन्यकिरीटरोचिषां
मिषेण बालार्ककरैर्विराजिते ।
पदाम्बुजे यस्य मसारपीठिका-
सरस्यभूतामनिशं विकस्वरे ॥ ४ ॥

---

१. 'त' ख. पाठः.

G. P. T. 1489. 500. 321

॥ श्रीः ॥

श्रीमद्रामपाणिवादविरचितं

# राघवीयम् ।

## प्रथमः सर्गः ।

श्रियः प्रसूतिर्मनुवंशजन्मना-
मभूदयोध्येति पुरी महीभुजाम् ।
स तां भुनक्ति स्म सतां पुरःसरो
महारथः पङ्क्तिरथाह्वयो नृपः ॥ १ ॥

अनल्पकल्पद्रुमराजिराजिते
सुवर्णकल्हारसुगन्धिमारुते ।
विशश्रमे यस्य दिगन्तधाविना
यशोमरालेन सुरापगातटे ॥ २ ॥

अमित्रभूपालनतभ्रुवां हृदि
ज्वलन् भुजोष्मा खलु यस्य दुःसहः ।
अशोषयन्नेत्रजलोक्षितामपि
स्तनस्थलीराजिषु पत्रवल्लरीम् ॥ ३ ॥

अशेषराजन्यकिरीटरोचिषां
मिषेण बालार्ककरैर्विराजिते ।
पदाम्बुजे यस्य मसारपीठिका-
सरस्यभूतामनिशं विकस्वरे ॥ ४ ॥

१. 'त' ख. पाठः.

G. P. T. 1489. 500. 3 2 1

धरापतेस्तस्य सधर्मचारिणी
बभूव सा कोसलराजनन्दना ।
यया स रेमे तमसा विहीनया
चिराय राकानिशयेव चन्द्रमाः ॥ ५ ॥

स केकयस्योदवहत् सुतां पुन-
र्मनोभिरामां मगधस्य चात्मजाम् ।
अथ स्म तिस्रो रमयन्ति ता नृपं
वियन्नदीवेण्य इवार्णसां निधिम् ॥ ६ ॥

क्रमेण वह्वीः परिणीतवानथो
नरेन्द्रकन्या नरलोकनायकः ।
ततश्च तास्वन्यतमा तु कन्यका-
मसूत शान्तेति यथार्थनामिकाम् ॥ ७ ॥

अथानपत्यः स्वयमङ्गभूपतिः
समेत्य राजानमिमामयाचत ।
ददौ च निःसंशयमेकहायनीं
स रोमपादाय दयालुरात्मजाम् ॥ ८ ॥

स चाङ्गराजः स्वपुरं प्रवेश्य ता-
मवीवृधत् सादरमात्मभार्यया ।
तदाननाम्भोजनिवेशितेक्षणो
जहौ च धीमाननपत्यताशुचम् ॥ ९ ॥

अवग्रहो जातुचिदस्य मण्डलं
तुतोद राहुग्रहवत् कलानिधेः ।
अतः प्रजास्तस्य विनेशुरीशितुः
क ईश्वरः कर्मसु कर्कशे विधौ ॥ १० ॥

अथाशृणोद् वृद्धमुखान्महीपति-
स्तदृश्यशृङ्गस्य मुनेस्तपोबलम् ।
यदस्य पादाब्जरजांसि कुर्वते
महीमहीनाखिलसस्यसम्पदम् ॥ ११ ॥

यदा तदाह्वानविधावधीरतां
ययुस्तदुग्रद्युतितोऽस्य पूरुषाः ।
तदा मदात् पूर्व ........................
........................ त्वरीशतम् ॥ १२ ॥

रणत्तुलाकोटिसविभ्रमार्पितैः
पदैरुदारैश्च कटाक्षवीक्षितैः ।
स्मितैः सिताम्भोरुहकाननप्रभै-
रभीयुरस्याश्रमवासमङ्गनाः ॥ १३ ॥

स ऋश्यशृङ्गो मुनिरृश्यमण्डले
चलन्नलोकिष्ट विलासिनीरमूः ।
सविस्मयः प्राप्य च दत्तसत्क्रियः
प्रियातिथिर्वाचमिमामवोचत ॥ १४ ॥

अपि स्थिरा वः कुशलं मुनीश्वराः !
विवृद्धिमप्यश्नुवते तपांसि वः ।
अहो समाधेरचलस्य वैभवं
यदीदृशी रूपसमृद्धिराप्यते ॥ १५ ॥

दलद्दलद्वेषिमणित्विषो जटाः
परार्ध्यवर्णानि च वल्कलानि वः ।
अदृष्टपूर्वा खलु कान्तिरीदृशी
तपोधनानां फलमूलभोजिनाम् ॥ १६ ॥

सुगन्धितेयं बत किञ्चिवन्धना
घना मनोहारिषु विग्रहेषु वः ।
अमी समूढा लघुपुष्पिता लता
विहाय यामभ्युपयान्ति षट्पदाः ॥ १७ ॥

अथाब्रुवन्नार्द्रमृदुस्मिताः स्त्रिय-
स्तपस्यया किन्नु दुरापमुग्रया ।
उपैतु योगिंस्तरसास्मदाश्रमा-
नितोऽपि तत्राद्भुतमीक्षिता भवान् ॥ १८ ॥

अमूनि च स्वादुतमानि मादृशां
फलानि निःशङ्कमशान कानिचित् ।
इति स्म तस्मै वितरन्ति योषितः
प्रमोदकं मोदकषण्डमादरात् ॥ १९ ॥

तथेत्यनुप्रस्थितमाशु मोदकै-
र्वशीकृतं तं वशिनां पुरःसरम् ।
शनैःशनैराचकृषुर्मृगीदृशो
बलादविद्या इव केवलेश्वरम् ॥ २० ॥

यदा पदाम्भोजरजोऽङ्गमण्डले
तदीयमभ्यापतदद्भुतं परम् ।
तदैव जीमूतघटानिरन्तरं
नभो बभूव स्तनितातिभैरवम् ॥ २१ ॥

अपाकृतस्फाटिकदण्डडम्बरा-
श्चिराय धाराधरगर्भनिःसृताः ।
नभःश्रियो हारलता इवापतन्
नवाम्बुधारा धरणौ धरापतेः ॥ २२ ॥

अवग्रहे तादृशि शान्तिमेयुषि
प्रसाद्य सद्यः स्वयमङ्गपुङ्गवः ।
प्रणम्य तस्मै विततार योगिने
कुमारिकामाहुतिमग्नये यथा ॥ २३ ॥

दिनेशवंशाभरणं तु भूपति-
र्गुरोर्वसिष्ठस्य बृहस्पतेरिव ।
मते स्थितस्तावदशादशेषतो
दिवस्पतिर्द्यामिव भूमिमण्डलीम् ॥ २४ ॥

अजस्रमिष्टी स मखेषु पूर्त्तवा-
नधीत्यशेषासु कलासु नीतिमान् ।
अनुद्धतो वृद्धमतेषु च श्रुती
श्रुतारितेऽध्वन्यधिताध्वनीनताम् ॥ २५ ॥

ततः समासादितवित्तसम्पदः
क्षणादशक्रायिपतार्थिनोऽखिलाः ।
तदङ्गनाश्चाशचयमधिश्रिय-
स्तदात्मजाश्च स्वरुचाजयन्तिपुः ॥ २६ ॥

पुरोऽस्य केचित् त्रिपुरानजीघतन्
पुराविदः काममदीदहन् परे ।
परे तु वेदानुदजीहरन् द्विजा-
स्तथेतरे सिन्धुसुतां व्यवीवहन् ॥ २७ ॥

अमन्दवन्दिस्तुतिवर्णवर्णित-
त्रिविष्टपाविष्टगरिष्ठविक्रमः ।
क्रमेण वर्णाश्रमरक्षणोन्मुखः
सखा मघोनः सुखमावसत् पुरीम् ॥ २८ ॥

विवृद्धसत्त्वोऽपि विशुद्धिमानपि
स्वभावगम्भीरतया महानपि ।
अदह्यतान्तस्तनयत्यताशुचा
स वाडवाग्नेः शिखयेव वारिधिः ॥ २९ ॥

अथान्तराधिप्रसरो महीपते-
रसूचि वक्त्रेण भृशं विशुष्यता ।
वनस्पतेः कोटररन्ध्रमाश्रितः
प्रसूनजालेन यथा दवानलः ॥ ३० ॥

ततः परिज्ञाततदार्त्तिकारणैः
कृती सुमन्त्रः प्रणमन्नुवाच तम् ।
कृतं महाराज! कृतात्मशोषया
शुचानया श्रेयसि दृष्टदोषया ॥ ३१ ॥

गुणैः प्रतीता भवितार एव ते
शिवङ्करत्वेन सुताः सतां मताः ।
निधानितारः शुभकर्मविद्विषो
निसर्गशूराः सुरवैरिणोऽपि येः ॥ ३२ ॥

---

१. 'य', २. 'ण' क. पाठः.

मुनिः स कालत्रितयार्थतत्त्ववित्
सनत्कुमारः स्वयमब्रवीदिदम् ।
यदृश्यशृङ्गस्य मुनेस्तपोबलाद्
बलारिबन्धुर्भवितात्मवानिति ॥ ३३ ॥

यदद्य जामातरमानयामि ते
मुनीन्द्रमास्ते खलु योऽङ्कमण्डले ।
इतीरितो वृद्धतमेन मन्त्रिणा
प्रसेदिवांस्तन्मतमन्वमंस्त सः ॥ ३४ ॥

अनायि शान्तानुगतः स मन्त्रिभि-
र्महत्तरैरुत्तरकोसलान्मुनिः ।
विनीतवेषैरखिलप्रियङ्करः
फलोदयः स्वान् विषयान् नयैरिव ॥ ३५ ॥

अथाश्वमेधेन मखेन यक्ष्यता
नृपेण मैत्रावरुणेरनुज्ञया ।
ययुर्विसृष्टोऽनुययुश्च रक्षिण-
स्तुरङ्गमेनं चतुरङ्गसैनिकाः ॥ ३६ ॥

अबाधितं क्वापि विपक्षमण्डलै-
र्विलङ्घ्य तांस्तान् विषयान् क्रमेण सः ।
यतः प्रवृत्तो विनिवृत्य तत्पदं
समाससादास्तिकतर्कवद् ययुः ॥ ३७ ॥

ततः समारम्भितमां क्षमाभुजा
स सप्ततन्तुः सरयूतटे शुभे ।
वासिष्ठवैभण्डककाश्यपादिभि-
र्महद्भिरृत्विग्भिरुपाहिताक्रियः ॥ ३८ ॥

सहैव दारत्रितयेन दीक्षितः
क्षितेरधीशः सुतरामराजत ।
सहेतरैरात्मफलानुवर्त्तिभि-
स्त्रिभिश्चतुर्थः पुरुषार्थराडिव ॥ ३९ ॥

१. 'वत्र्य' ख. पाठः.

हविस्समावर्जनसज्जनिर्जर-
त्वरोत्थसंमर्दकरम्बिताम्बरे ।
मखे विवृद्धे दशकण्ठतापितै-
र्जनैरुदश्वासि जगत्त्रयाश्रयैः ॥ ४० ॥

हिरण्यगर्भप्रमुखास्तदन्तरे
नितान्ततृप्ता हविषा दिवौकसः ।
पयःपयोधौ फणितल्पशायिनं
पुमांसमाद्यं शरणं प्रपेदिरे ॥ ४१ ॥

स योगनिद्रामवधूय पाणिना
श्रियः समालम्ब्य कराब्जमुत्थितः ।
वचोभिरारब्धनुतीनकृत्रिमैः
सुपर्वणः सर्वविदेवमूचिवान् ॥ ४२ ॥

अवैमि वो निर्जरसन्तिरस्क्रियां
विधीयमानामधिपेन रक्षसाम् ।
निशान्धकारस्य यथाभ्रदुर्दिनं
तथास्य जातं वरदानमृद्धये ॥ ४३ ॥

असन्ततेः पङ्क्तिरथस्य भूपते-
रपत्यभावेन जनिष्यते मया ।
ततः स घानिष्यत एव रावणो
मयीव भावेन सतां मतिभ्रमः ॥ ४४ ॥

भविष्यतो दाशरथेरमुष्य मे
निशाचरध्वान्तमपाकरिष्यतः ।
रवेर्मयूखानिव कर्मकारिणो
विनिर्मिमीध्वं विबुधाः प्लवङ्गमान् ॥ ४५ ॥

तमित्थमादिश्य गणं दिवौकसां
प्रमोदबाष्पार्द्रसहस्रलोचनम् ।
विभुश्चतुर्धा विभजन्निजं महो
महोज्ज्वलं पायसतामजीगमत् ॥ ४६ ॥

तदाहितं तप्तसुवर्णभाजने
करे ददौ पारिषदस्य कस्यचित् ।
इदं जवादर्पय पुत्रकाम्यते
रघोः सुतायेति वदन् जनार्दनः ॥ ४७ ॥

स तत्र पुत्राध्वरवेदिवर्त्मना
प्रदक्षिणोद्गत्वरकुण्डवर्त्मना ।
हविश्चरुं बिभ्रदद्भ्रसंभ्रमतः
समुज्जिहीते स्म नृपस्य सन्निधौ ॥ ४८ ॥

विलोकितो विस्मयनिश्चलेक्षणै-
र्जनैर्जगन्नायकधामधारकः ।
क्षणेन भूपाय स पायसं ददौ
तिरोदधे चर्पिसभासभाजितः ॥ ४९ ॥

(अ)थो यथाकामितभूमिदक्षिणे
समापिते सिद्धफलोदये मखे ।
मुनीश्वराज्ञामधिगम्य भूपति-
र्विभज्य हव्यं महिषीरलम्भयत् ॥ ५० ॥

जगन्निधेरंशचतुष्क एकको
नृपाङ्गनासु प्रथमामशिश्रियत् ।
ततो द्वितीयोऽभिजगाम मध्यमा-
मथावशिष्टौ चरमामवापतुः ॥ ५१ ॥

हरेः कलावेशविशुद्धगर्भतां
मुखेन पाण्डुच्छविना मृगीदृशः ।
प्रकाशयन्ति स्म ततः शनैः शनै-
र्विधेरिवाह्नो विरतौ दिगङ्गनाः ॥ ५२ ॥

क्रमेण मध्यो मनुजेन्द्रसुभ्रुवां
सुलक्षतामाप विवादगोचरः ।
क्व नास्तिका आस्तिकपक्षरक्षणे
विचक्षणे गर्भमधिष्ठिते विभौ ॥ ५३ ॥

*Frontispiece.*



*Facsimile* of pages of Naḷacaritam Kiḷippāṭṭu, T. U. O. M. L. No. L/81., showing name of author (upper leaf, from end of first line) and date of manuscript (lower leaf, last line marked place.)

(*To face page 9.*)

पयोधरद्वन्द्वमुखं नु चुम्बति
स्वनामसख्याददसीयमम्बुदः ।
गिरीन्द्रशृङ्गभ्रमतोऽथवेति ताः
शशङ्किरे मेचकचूचुकस्तनीः ॥ ५४ ॥

वपुर्विहायापि विहारपाटवं
विहारमेव स्वमियेष सुभ्रुवाम् ।
अनारतं यत् परिचीयते जनै-
र्न शक्यते तत् खलु शीलमुज्झितुम् ॥ ५५ ॥

धृतावसादे हरिणीदृशां दृशौ
कथञ्चिदन्योन्यकरावलम्बने ।
पथि स्वकर्णोत्पलयोस्ततः सखी-
मुखेषु विश्रम्य नृपास्यमीयतुः ॥ ५६ ॥

स्मितच्छविः स्वच्छतयेन्दुनिन्दिनी
सरागसाशैशवबद्धसौहृदम् ।
विमुच्य तासामधरोष्ठपल्लवं
शशाक न क्वापि ततः प्रसर्पितुम् ॥ ५७ ॥

नितम्बभाराद् गतिमन्दतां गुरो-
श्चिरादधीत्यापि तथा न रेजतुः ।
पदाम्बुजे पद्मदृशां यथा तदा
तदन्तरूढस्य जगद्गुरोर्भरात् ॥ ५८ ॥

सह क्षितीशस्य मनोरथाङ्कुरैः
समं च भाग्येन बलस्य वैरिणः ।
भिया च साकं शुभकर्मविद्विषां
तदीयगर्भा व्यवृधन् दिने दिने ॥ ५९ ॥

क्रमेण पूर्णे दशमे तु मासि सा
शुभे दिने कोसलराजनन्दना ।
जगत्प्रमोदं सुषुवे कुमारकं
प्रकाशमुच्चैरिव भानुदीधितिः ॥ ६० ॥

स राम इत्यक्षरकान्तिगौरवा-
न्मनोभिरामो गुरुणा कृताह्वयः ।
निरामयान्येव जगन्ति यस्य हि
द्विषां विरामस्य कथा करिष्यति ॥ ६१ ॥

असाबि तावद् भरतो द्वितीयया
तृतीययाजन्यत लक्ष्मणः सुतः ।
तयैव शत्रुघ्न इतीतरोऽप्यमू-
रलप्सतैवं चतुरः कुमारकान् ॥ ६२ ॥

अथ व्यजृम्भिष्ट दिगन्तदन्तिनां
प्रमोदबृंहापरिबृंहितोदयः ।
दिवौकसां वेश्मसु शङ्खदुन्दुभि-
ध्वनिर्घनध्वानघनो मनोहरः ॥ ६३ ॥

सुरीपरीरम्भविजृम्भितोद्यम-
श्रीकरीति स्म गणः सुपर्वणाम् ।
अरीणरीतिक्रमगीतिमाधुरी-
धुरीणवीणः परितोषताण्डवम् ॥ ६४ ॥

पुलोमजाकुन्तलबन्धबन्धुतां
वहन्ति पुष्पाणि निलिम्पभूरुहाम् ।
विलावयन्तः सहचारिमारुतै-
र्जवादवाकारिषुरम्बुदास्तदा ॥ ६५ ॥

दशास्यदोर्विक्रमदत्तदुर्दशा
दशापि तावत्प्रचकाशिरे दिशः ।
शनैरुदस्राक्षुरुदारसौरभं
प्रमोदनिःश्वासमिवानिलं शिवम् ॥ ६६ ॥

अतन्द्रवन्दिस्तुतिगुम्फशुम्भितं
मदान्धगन्धर्वगणोपवीणितम् ।
जनैरुपश्लोकितमुत्तकर्कशै-
र्महीसुरावर्तितवेदपल्लवम् ॥ ६७ ॥

नरेन्द्रविश्राणितवित्तवित्तपी-
कृता(र्थ? र्थि)सार्थं चरितार्थपार्थिवम् ।
पुरोहितोपाहितशान्तिकक्रियं
बभूव तज्जन्मदिनं महोत्सवः ॥ ६८ ॥

अथ प्रमोदामृतवारि मज्जता
महीमहेन्द्रेण कृतोचितक्रियाः ।
विवृद्धिमानन्दनवेन्दवो नृणां
शनैः शनैरानशिरे कुमारकाः ॥ ६९ ॥

तदनु मनुकुलेन्द्रस्तापरूपान्धकार-
प्रशमनदिननाथैः प्राणिनामेकनाथैः ।
अरमत चिरमेभिः शास्त्रशस्त्रास्त्रविद्या-
समधिगमसमिद्धैरात्मजैरात्मतुल्यैः ॥ ७० ॥

शुश्राव तावदुपकण्ठमुपेयिवांसं
विश्वोपकारकविशुद्धतपःप्रकाशम् ।
वेदान्तशीलनविविक्तमना मुमुक्षुः
स्वात्मावबोधमिव गाधिसुतं नरेन्द्रः ॥ ७१ ॥

इति श्रीमद्रामपाणिवादविरचिते राघवीये महाकाव्ये
प्रथमः सर्गः ।

---

## अथ द्वितीयः सर्गः ।

महार्घरत्नद्युतिदीप्यमानादानन्दनिर्व्यूढमुखप्रसादः ।
सिंहासनादुच्चलितः स रेजे पूर्वाद्रिशृङ्गादिव पूर्णचन्द्रः ॥ १ ॥
पुरःसरीकृत्य स वामदेवं समुन्नतश्रीः श्रुतिशीलशुद्धम् ।
प्रत्युज्जगाम प्रमना मुनीन्द्रं तटं समुद्रोर्मिरिवोग्रफेनः ॥ २ ॥
ततः स्फुरत्पिङ्गजटाकलापं कर्णावतंसस्फटिकाक्षसूत्रम् ।
वहन्तमभ्याशवलद्बलाकं सन्ध्यारुणं मेघमिवोत्तमाङ्गम् ॥ ३ ॥
तपःकृशामप्यतनुप्रवृद्धैस्तनूमनूनां दधतं महोभिः ।
निदाघशुष्कामपि पूर्णरूपां शमीमिवालीनशिखिप्रकाशैः ॥ ४ ॥

अजस्रसङ्कीर्तनयाजनाम्नां मुखादखेदस्फुरिताधरोष्ठात्
निसर्गशुभ्रं दशनांशुजालमन्तस्तपः शुद्धमिवोत्किरन्तम् ॥ ५॥

कुशाग्रदीर्णेन कराञ्चलेन द्राघीयसीमम्बुजबीजमालाम् ।
शापाक्षरालीमिव मेचकाभामनेकवारं परिवर्तयन्तम् ॥ ६॥

चूडाग्रजाग्रत्करकोरकाणां दत्ताध्वनां दूरविसर्पणेन ।
पुरौकसां भक्तिमतां मुखेषु सानुग्रहं दर्शनमर्पयन्तम् ॥ ७॥

क्व राजसिंहो बलवैरिबन्धुरित्यन्तिकस्थेषु कृतानुयोगम् ।
मुनिं समेत्याभिहितस्वनामा साष्टाङ्गपातं प्रणनाम राजा ॥ ८॥

अथैनमुत्थाप्य मुनिः कराभ्यामन्वग्रहीदस्तु यशस्तवेति ।
ततस्तदावेदितपद्धतिश्च प्रसेदिवानग्निगृहं प्रपेदे ॥ ९॥

तमर्घ्यपाद्यासनसत्क्रियाभिर्यथाश्रुतं विश्रुतमर्चयित्वा ।
सप्रश्रयः कुड्मलिताग्रपाणिरित्यब्रवीदिन्दुमतीतनूजः ॥ १०॥

अद्य प्रसन्नं कुलदेवताभिरद्यास्मि वंशे सवितुः सुजातः ।
राजन्वती चाद्य मया धरित्री यदस्मदावासमलङ्कुरुध्वे ॥ ११॥

अयाजयन्मां मुनिर्ऋश्यशृङ्गः स पुत्रकाम्यान्तमनन्ततेजाः ।
अतोऽध्यगच्छं चतुरः कुमारानाराधनं किं न ददाति शौरेः ॥

तमेकमेवाभ्युदयं भवन्तो वितन्वते सम्प्रति सद्वितीयम् ।
सुखानि दुःखानि च जीवलोके न सानुबन्धानि हि नापतन्ति ॥

अनुग्रहोऽयं मम गाधिजन्मन् ! कृतस्त्वया पुण्यचयैकलभ्यः ।
न कारणं किञ्चिदपेक्ष्यतेऽन्यदस्मासु कर्तव्यतया यदास्ते ॥ १४॥

धर्म्यासु लोकत्रयपावनीषु सम्प्रत्यवेक्ष्यासु च भूमिपालैः ।
क्रियासु वः कास्वपि धर्मबाह्याः कच्चिन्मुने ! नातिचरन्ति केचित् ॥

ममापि षष्ठांशभुजोऽपचारात् फलन्ति पुष्यन्ति च वा न वृक्षाः ।
ऋतुष्वप योऽपि न यत्र शक्रः [illegible]वेत तत्रापि नृपापचारः ॥ १६॥

इति क्षितीशस्य वचो निशम्य स्निग्धामृतस्यन्दसवर्णवर्णम् ।
उवाच वाचं मुनिरात्मनीनां प्रकाशयन् राघवयोर्निनीषाम् ॥१७॥

सख्यौ मघोनस्त्वयि भूतधात्रीं चापेन गोपायति नः कुतो भीः ।
शीतं पयो वर्षति वारिवाहे पिपासयार्तिः क्वनु चातकानाम् ॥ १८ ॥

स्वस्थानवर्त्ती खलु चापदण्डः शरेण मुक्तेन भिनत्ति शत्रून् ।
यथा रविश्च स्वकरोत्करेण निहन्ति दूरादपि चान्धकारान् ॥ १९ ॥

तवापि दिष्ट्या भुवनत्रयस्यच्छिद्रापिधानाय कियान् प्रयासः ।
यदेष वैभण्डकपुण्यकर्मकन्दाङ्कुरोऽप्याजनि रामभद्रः ॥ २० ॥

देवारिहेवाकतमःसमूहनिबर्हणाक्रीडनतिग्मभासा ।
अनेन विध्वंसय भूमहेन्द्र ! द्विषन्ति ये मह्यमरातयस्तान् ॥ २१ ॥

तथाहि दोर्मण्डलपिण्डितारिस्तिरस्कृताखण्डलवज्रकीर्त्तिः ।
स रावणो नाम भुनक्ति लङ्कामलङ्घ्यवीर्यो रजनीचरेन्द्रः ॥ २२ ॥

श्वसद्भुजङ्गं चलिताभ्रगङ्गं भ्रश्यत्कुरङ्गं दधताङ्गमङ्गम् ।
पिनाकिना जुष्टमुदाक्षिपद् यो भुजावलेपेन कुबेरशैलम् ॥ २३ ॥

दिगन्तदन्तिव्रजदन्तकुन्तनिकृन्तनोद्यद्व्रणकर्कशेन ।
प्रतीच्छति स्वेन विकुण्ठिताग्रं तं वक्षसा यो युधि कालदण्डम् ॥ २४ ॥

दिशो जिता येन सलोकपाला बन्दीकृताश्चाप्सरसः समस्ताः ।
हृताः शचीकर्णवतंसपुष्पच्छदप्रसिद्धाः सुरपादपाश्च ॥ २५ ॥

तेनासिधारादलितात्ममूर्धश्रेणीस्रगाराद्धमहेश्वरेण ।
सुबाहुमारीचमुखा नियुक्ता विघ्नन्ति यज्ञं मम यातुधानाः ॥ २६ ॥

यत्रर्त्विजो जुह्वति मन्त्रपूतं हविर्विधिवज्ज्वलिते कृशानौ ।
तत्रैव ते खादितपीतशेषं दुर्गन्धि मांसक्षतजं क्षिपन्ति ॥ २७ ॥

पशूंश्च यूपग्रथितान् हरन्ति प्रक्षिप्य भृज्जन्ति च दक्षिणाग्नौ ।
अथो यथेष्टं पुनरस्मदग्रे निःशेषमश्नन्ति च तान् पलादाः ॥२८ ॥

कङ्कालखण्डानथ खादयन्तो गण्डूषयन्तश्च वसाघृतानि ।
ते यज्ञवाटं परितश्चरन्ति ष्ठीवन्ति वेद्यां कुशसञ्चितायाम् ॥ २९ ॥

हवींषि कुम्भीकुटसम्भृतानि पक्वानि सक्वाथमतस्थितानि ।
विद्रावयन्तो गणमृत्विजां ते सद्यः समाहृत्य च भक्षयन्ति ॥ ३० ॥

मायाविनः केचन दन्तिभूयं प्रपद्य भिन्दन्ति सपल्लवानि ।
शाखाविपक्त्वार्द्रमृगाजिनानि कुलानि रम्याण्युटजद्रुमाणाम् ॥ ३१ ॥
सद्यःप्रसूताण्डशतोत्सुकाभिरनूद्यमानश्रुतिभिः शुकीभिः ।
कुलायलीनाभिरनुज्झितानि भञ्जन्ति कुञ्जानि च वीरुधां ते ॥
अश्नन्ति पर्यन्ततृणाङ्कुराणि मुहुर्मुहुर्वीक्षिततर्णकानि ।
पिबन्ति चाम्बूनि वटूपनीतान्यमी विमृद्नन्ति मृगीकुलानि ॥३३॥
जुहूचषालस्रुगुलूखलाद्यैरशून्यमन्यैश्च परिच्छदैर्यत् ।
सबालकुब्जान्धजरद्द्वराकं प्लुष्यन्ति ते तत् खलु पर्णशालम् ॥ ३४॥
येनोपजीवन्ति वने मुनीन्द्राः सन्ध्यासु यस्मिन्नभिषुण्वते च ।
तत् कौशिकीवारि सरोजशोभि रक्षोभिरक्षोभि लुलायवेषैः ॥ ३५॥
इति स्थिते मे यजनानि राजन्ननेकधा प्रस्तुतविघ्नितानि ।
त्रातुं क्षमश्चेदयमेव लोके सलक्ष्मणः संप्रति रामभद्रः ॥ ३६ ॥
पुण्यस्य वैतानविधेर्महात्मन्! गोप्तारमारूढभुजापदानम् ।
निजं कुमारं प्रहिणु प्रहृष्यन् बालोऽपि दुर्वारविषो हि भोगी ॥३७॥
चन्द्राभिरामामभितो दिगन्तानावृण्वतीमात्मगुणप्रकर्षैः ।
बन्दीकृतां सम्प्रति रावणेन प्रत्याहरत्वेष यशोमहेलाम् ॥ ३८ ॥
इति ब्रुवाणे सति गाधिसूनौ विचिन्तयन् पुत्रवियोगदुःखम् ।
स्विद्यन्मुखो बाष्पनिरुद्धकण्ठो नृपः शनैरात्मगतं जगाद ॥ ३९ ॥
गरं पिबेत् पङ्क्तिरथः पतेद्वा जृम्भाविदीर्णे वदने मृगारेः ।
तथा विशेद्वा दहनं ज्वलन्तं न तु क्षमेतात्मजयोर्वियोगम् ॥ ४० ॥
करैः स्वसूतैरपि विप्रमुक्तो दिने शशी शोच्यतमो जनानाम् ।
ऋतुव्यपाये स्वभवंप्रसूनैर्विनाकृतः शोकतरो ह्यशोकः ॥ ४१ ॥
कथं ब्रुवे च स्वसुतौ न दास्ये तवेति सूर्यान्वयजो मुनीन्द्रम् ।
बालौ कथं वा पिशिताशनानां विहारभूमिं प्रति यापयेयम् ॥४२॥
स क्षेमकारी जगतां विधिर्मे रक्ष्योऽयमर्थी च कृशाश्वशिष्यः ।
धर्मो वरीयान् विपतन्ममायो धनुर्भृतामभ्यधिको रघूणाम् ॥ ४३ ॥

१. 'वैः प्र, ख. पाठः

कथं परार्थप्रवणत्वमेषामनन्तदिग्दन्तिसमव्रतानाम् ।
अशीतरोचिःकुलसम्भवानां महीभुजां पङ्क्तिरथः क्षिणोतु ॥ ४४॥
अयं च गाधेस्तनयोऽर्थिभावं व्यर्थीभवन्तं विमृशन् निवृत्तः ।
घटेत यज्ञे तपसा जितारिः शिनष्टि यावत्त्वयशः परं नः ॥ ४५ ॥
अथ प्रकाशं स मुनिं बभाषे सुरक्षितः स्यात् तव सप्ततन्तुः ।
किन्तु प्रतिद्वन्द्विनिबर्हणार्थं सन्नद्ध एषोऽस्मि मुने ! न रामः ॥
सुरारिनिर्मूलनदृष्टसारं धनुर्ममेदं दृढशिञ्जिनीकम् ।
निरासिताम्रैस्तव वैरिवृन्दं तमिस्रमुस्रैरिव भानुबिम्बम् ॥ ४७ ॥
किं क्षीरकण्ठोऽयमशिक्षितास्त्रः समीकचर्यामविदन् कुमारः ।
गणं निरुन्धीत निशाचराणां तृणाग्रगो बिन्दुरिवान्तवह्निम् ॥
निशम्य तां वाचमजस्य सूनोरिच्छाविभङ्गात् सहसोदितेन ।
कोपेन रज्यन्नयनो निवृत्तो मुनिर्वसिष्ठेन गिरान्वनायि ॥ ४९ ॥
अयं प्रियापत्यतया ब्रवीति प्रसीद विद्वन्नयमञ्जलिस्ते ।
वदन्ति दुर्वारममत्वसर्पग्रस्तो हि विद्वानपि मुह्यतीति ॥ ५० ॥
असौ न वेत्ति क्षितिपस्त्वदीयं यज्ञावनव्याजमगाधबुद्धे ! ।
चिकीर्षितं येन कृतेन रामो भवेदधृष्यः प्रथमानतेजाः ॥ ५१ ॥
अरुन्धतीजानिरिति ब्रुवाणस्तस्य प्रकोपं शमयाञ्चकार ।
स्वच्छस्तटाको न भवेदनच्छो भवन्नपि क्षिप्रमुपैति शुद्धिम् ॥ ५२ ॥
निवृत्य स क्षोणिपतिं जगाद प्रयच्छ पुत्रौ कुशिकात्मजाय ।
य एनयोः श्रेयस एव राजन्नभूदपूर्वोऽद्य वनीपकस्ते ॥ ५३ ॥
अयं विनेता धनुषि ध्रुवं ते कुमारकौ शस्त्रकलास्वधीती ।
घानिष्यते येन परं न ताभ्यां सुबाहुमिश्रोऽपितु रावणोऽपि ॥
गुरोरथाकर्ण्य गिरं नरेन्द्रो धृतानुतापस्तरसाजुहाव ।
सलक्ष्मणं राममथ प्रहृष्यन् दृष्ट्वैनमात्तं मुनिरन्वचिन्तत् ॥ ५५ ॥
अयं शयानोऽपि भुजङ्गतल्पे जगत्त्रयत्रातिषु जाग्रदेव ।
अपि स्वयं वाङ्मनसातिवर्त्ती शरीरिणां सन्ततमन्तरास्ते ॥ ५६ ॥
चराचराणां जगतां सहस्रमस्योदरे तिष्ठति निर्विबाधम् ।
अस्य प्रसादाय जुहोति यज्वा त्रेतानले हव्यममेयधाम्नः ॥ ५७ ॥

निशाचराणां निजिघृक्षयायममर्त्यलोकाभयदायकः सन् ।
इक्ष्वाकुवंशे विहितावतारो विश्रास्यते कानि न मे हितानि ॥
बिभर्ति लोकत्रयमेष एव निजे भुजे शङ्खरथाङ्गचिह्ने ।
अतो हि विश्राम्यति वज्रपाणिः शचीसमाकर्म्बनमात्रकृत्यः ॥
इत्थं विचिन्त्य प्रमनायमानं प्रणेमतुर्गाधिसुतं कुमारौ ।
स चाश्रुसंस्तम्भितवाक्प्रवृत्तिर्वह्वीभिराशीभिरवीवृधत् तौ ॥ ६० ॥
जगाद राजा जगदेकवीरौ कुर्यातमार्यस्य मुनेरनुज्ञाम् ।
एतद्वशे तिष्ठतमप्रमत्तौ यन्नाहहो यत् कुहनाप्रवीणाः ॥ ६१ ॥
ततो मुनिः पङ्क्तिरथस्य मौलौ पाणी निधायातिचिरं प्रदध्यौ ।
सुतौ च पादावुपगृह्य मूर्ध्ना बभूवतुस्तन्नयनाश्रुसिक्तौ ॥ ६२ ॥
प्रवन्द्य सर्वानपि वन्दनीयांस्तदाशिषस्तावदवाप्तवन्तौ ।
आस्तां च तौ ताभिरतीव दीप्तौ निदाघलक्ष्मीभिरिवेन्दुसूर्यौ ॥

ऋतुमिव मधुमाधवौ वसन्तं
गुरुमिव वाचि विदग्धमाश्विनेयौ ।
हरमिव गजवक्त्रकार्त्तिकेयौ
रघुतनयावनुजग्मतुर्मुनीन्द्रम् ॥ ६४ ॥

इति श्रीमद्रामपाणिवादविरचिते राघवीये महाकाव्ये
द्वितीयः सर्गः ।

---

## अथ तृतीयः सर्गः ।

अथ तौ धृतचापसायकौ मुनिपादार्पितलोचनाम्बुजौ ।
गतिचञ्चलकाकपक्षकावनुवाति स्म शुभः समीरणः ॥ १ ॥
विरुतं जयशंसिभिः खगैरनुकूलैरुपवल्गितं मृगैः ।
मधुलीनमधुव्रतैस्तदा पतितं च प्रसवैर्महीरुहाम् ॥ २ ॥

---

१. 'म्भ' ख. पाठ.

दिवि दुन्दुभयो दिवौकसामभिनेदुः प्रहता नभोनिलैः ।
सुरशाखिलता मणीवकैर्मणिकिञ्जल्कदलैरवाकिरन् ॥ ३ ॥

पुरयौवतकेलिमज्जनस्तनसङ्घट्टनफेनिलाम्भसम् ।
सरयूमतिवाह्य राघवौ ययतुर्गाधिसुतानुसारिणौ ॥ ४ ॥

पथिकैरुपसृत्य मार्गतो ददृशाते कुतुकप्रसारितैः ।
नयनैरनिमेषवृत्तिभिर्नवचन्द्राविव भिन्नविग्रहौ ॥ ५ ॥

तृणचर्वणनिःस्पृहैर्मृगैरभितो वर्त्म शनैरनुद्रुतौ ।
पदपङ्कजपांसुभिः शुभैरपुनीतां विपिनानि बालकौ ॥ ६ ॥

इह हि द्विषता पुरः पुरा स्फुरदग्नौ निटिलाङ्कलोचने ।
शलभत्वमनायि चित्तभूरिति तौ गाधिसुतेन बोधितौ ॥ ७ ॥

स बलातिबले इति श्रुतं मनुयुग्मं मनुवंशमण्डनौ ।
क्षुधितोदरपूरणक्षमं मुनिरध्यापिपदध्वसादितौ ॥ ८ ॥

तरुजालनिवारितातपं करिकण्ठीरव(साग ? सङ्ग)राङ्कणम् ।
पुरतो ददृशे भयङ्करं शरभाक्रान्तगुहं महावनम् ॥ ९ ॥

मुनिरेवमुवाच राघवौ गहनं पश्यतमुग्रमग्रतः ।
इह काचन ताटकाभिधा वसति क्रूरतमा निशाचरी ॥ १० ॥

उचितास्पदलम्भनेन तामवति प्रीणयतीति यौगिकम् ।
तदिदं खलु ताटकावनं न तु तत्स्वामिकमेव केवलम् ॥ ११ ॥

नरमण्डलमुण्डकुण्डला विलसत्कीकसमालभारिणी ।
इह सा मुनिमांसशोणितैर्विदधाति स्वयमाशितम्भवम् ॥ १२ ॥

समवाप सुकेतुरात्मजां किल यक्षश्चतुरास्यमर्चयन् ।
अथ सुन्द इमामुदूढवान् स च मारीचमलब्ध नन्दनम् ॥ १३ ॥

स तु दुष्टमतिर्मुनीश्वरं सहसा विप्रचकार कुम्भजम् ।
समपद्यत चास्य शापतो बत रक्षो जननी च राक्षसी ॥ १४ ॥

अथ सा क्रतुविघ्नकर्मणि प्रणिधाय च्छलयोधिनं सुतम् ।
समदेभसहस्रसत्त्वतां दधती द्रुह्यति पान्थपङ्क्तये ॥ १५ ॥

वनितावधवैमुखीं विना द्रुतमेनां निगृहाण वीक्षिताम् ।
नृपतिः समयातिवर्तिनां प्रविनेता नहि लिङ्गमीक्षते ॥ १६ ॥

इति वादिनि गाधिजन्मनि स्थिरमातत्य धनुर्वनं विशन् ।
खतर्जितमेघगर्जितं स तदाऽस्फालयति स्म राघवः ॥ १७ ॥

अथ तद्ध्वनिरुद्धकर्णया सहसा विद्रुतमुद्रनिद्रया ।
रुधिरासवपानमत्तया नयनोद्यद्दहनस्फुलिङ्गया ॥ १८ ॥

भ्रमणक्वणितान्त्रमालया नखराग्रत्रुटिताभ्रमालया ।
निबिडोरुनिपातपातितद्रुमपाषाणनिरुद्धमार्गया ॥ १९ ॥

प्रविदारितवक्त्रगह्वरस्फुरदस्रारुणघोरदंष्ट्रया ।
करपीडितमांसनिस्सरत्क्षतजाप्यायितदीर्घजिह्वया ॥ २० ॥

सरुषा परुषाट्टहासया पुरुषास्थिस्रजमांसलांसया ।
द्रुतमागतया वनान्तरात् स मुनिस्ताटकयाभ्यभूयत ॥ २१ ॥

तरसा रघुसूनुराशुगं प्रणिसन्धाय धनुष्यथामुचत् ।
स च भानुरिवान्धशर्वरीं गमयामास निशाचरीं क्षयम् ॥ २२ ॥

गिरिशृङ्गमिवाशनिक्षतं क्षितिपृष्ठे निपपात तद्वपुः ।
स रवो मुरवादिमध्वनिः समभूदाशरघाततताण्डवे ॥ २३ ॥

अथ दिव्यमवाप्य सा वपुः क्षतशापा निजमासदत् पदम् ।
स च वैजयिकीभिरर्भकौ मुहुराशीर्भिरवर्धयन्मुनिः ॥ २४ ॥

प्रददौ च नरेन्द्रसूनवे स पुनर्जम्भकमस्त्रमुत्तमम् ।
यदलब्ध कृशाश्वतः स्वयं महितं ज्योतिरदस्तपोमयम् ॥ २५ ॥

अजिहीत च वामनाश्रमं सह ताभ्यां मुदिताशयो मुनिः ।
सततोज्ज्वलयास्त्रविद्यया मिलिताभ्यामतिसूर्यवर्चसा ॥ २६ ॥

इह कैतववामनो हरिस्तपसित्वा हृतवाञ्जगत्त्रयम् ।
इति कौशिकतो निशम्य तौ क्षणमाध्यानपरौ बभूवतुः ॥ २७ ॥

अनुकौशिकि कौशिकाश्रमं तदनु प्रापतुरग्रगामिना ।
मुनिना समभ्युपाव्रजन्मृगशावावलिरुद्धवर्त्मना ॥ २८ ॥

१. 'जा' ख. पाठः.

रघुसूनुविलोकनोत्सुकप्रतिसर्पद्वटुवर्गसङ्कुलम् ।
प्रविवेश मुनिः स्वमाश्रमं परितुष्यन्निजशिष्यपूजितः ॥ २९ ॥

अथ सम्भृतसर्वसाधनं मखमारभ्य स लब्धनिर्वृतिः ।
हुतहव्यसुगन्धगन्धभृत्परिलिप्ताध्वगनासिकापुटम् ॥ ३० ॥

सिकतावति कौशिकीतटे फलपुष्पाञ्चितवृक्षवीरुधि ।
अथ दाशरथी विचेरतुः परितो माणवकैरुपासितौ ॥ ३१ ॥

सरिदुच्चलवीचिसेचितस्थलपङ्केरुहगन्धबन्धवः ।
जयशब्दसृजो मधुव्रतध्वनिभिस्तौ मरुतः सिषेविरे ॥ ३२ ॥

अनरालमृणालकण्टकक्षतजन्मास्रपरिप्लुताविव ।
चरणावरुणौ दधत् तयोर्मुदमाधत्त मरालमण्डलम् ॥ ३३ ॥

नवशैवलपल्लवात्मिकामुपदामात्मवधूं निनीषुभिः ।
विचरद्भिरितस्ततस्तयो रतिराधायि रथाङ्गनामभिः ॥ ३४ ॥

हरिणैरुपकण्ठमागतैर्मृदुकण्डूयनमीलितेक्षणैः ।
तृणगर्भमुखैः समन्ततः स्थितमिक्ष्वाकुकुमारयोश्चिरम् ॥ ३५ ॥

शिखिभिः शिखरेषु शाखिनां स्फुटविस्तारितबर्हमण्डलैः ।
श्रुततद्धनुरुद्धतस्वनैः कलकेकामुखरैरनृत्यत ॥ ३६ ॥

मुनयो विनयोपशोभितावभितो यज्ञगृहं विहारिणौ ।
पपुराक्षिभिरक्षतद्युती वृषभोगाविव रामलक्ष्मणौ ॥ ३७ ॥

समिदाज्यसमिद्धपावके यजमानार्चितयज्ञपूरुषे ।
गगनोच्छ्रितधूममण्डले क्रमवृद्धे मरुतां सुखे मखे ॥ ३८ ॥

उदजृम्भि सुबाहुनेतृकैरथ धूमानुमिताग्नितर्पणैः ।
दशकण्ठचरैर्निशाचरैः शुभकर्मप्रकृतिद्विषा रुषा ॥ ३९ ॥

जलदैरिव मेचकप्रभैरविरामक्षतजाम्बुवर्षिभिः ।
स्तनितप्रतिमाट्टहासिभिर्गगनं तैरभवन्निरन्तरम् ॥ ४० ॥

कुशिकात्मज! किं मखेन ते सुरलोकाधिगमो यदीहितः ।
रजनीचरवक्त्रकन्दरा सरणिः साधुतरेति वादिभिः ॥ ४१ ॥



१. 'दारुवी', २. 'ल' ख. पाठः

धृतशूलगदापरश्वथच्छुरिकातोमरबाणकार्मुकैः ।
प्रहसद्भिरसाधुवादिभिः सहसा तैः स मखो व्यहन्यत ॥ ४२ ॥

अथ दूरसमुज्झितक्रिये सभये धावति ऋत्विजां गणे
प्रहसन् घनशिञ्जिनीरवं धनुराधत्त करेण राघवः ॥ ४३ ॥

समधत्त कृशानुदैवतं शरमाकर्णनते शरासने ।
शुशुभे च तथा स्थितश्चिरं दिननाथः परिवेषवानिव ॥ ४४ ॥

समधादथ लक्ष्मणः शरं मरुता सन्निहितं समाधिमान् ।
उभयोरिव वीरयोरभूदुभयोराशुगयोश्च सङ्गतम् ॥ ४५ ॥

तदनु द्विशरीसरीसृपीपरिलीढासुभिराशरैर्नभः ।
अतिदूरमपास्तमावभौ शरदीवाम्बुधरैरनाविलम् ॥ ४६ ॥

पवनास्त्रपलायितोऽपतज्जलधेरर्णसि ताटकासुतः ।
अथ राममनुस्मरन्नसून् मुनिवेषः स कथञ्चिदाप्तवान् ॥ ४७ ॥

इति तद् विनिहत्य राघवौ यजनद्वेषिकुलं पलाशिनाम् ।
उपगम्य मुनिं प्रणेमतुः श्रमवारिस्नापिताननाम्बुजौ ॥ ४८ ॥

जयिनौ भवतं जगत्प्रियाविति ताभ्यां प्रतिपादिताशिषा ।
मुनिनाश्रुतरङ्गितेक्षणं क्षणमानन्दजडेन वर्तितम् ॥ ४९ ॥

अथ यज्ञविधिं यथाविधि प्रविधायावभृथाप्लुतो मुनिः ।
अखिलं जगदस्तकण्टकं निरचैषीदमलेन चेतसा ॥ ५० ॥

जनकेन निमन्त्रितस्तदा यजमानेन विदेहभूभुजा ।
अभियातुमनास्तदास्पदं सविधस्थौ स जगाद राघवौ ॥ ५१ ॥

मिथिलेषु चकास्ति भूपतिः स हि सीरध्वज इत्यभिश्रुतः ।
प्रशमी खलु याज्ञवल्क्यतो निगमान्तानखिलानधीतवान् ॥ ५२ ॥

स बिभर्ति नृपः प्रणाय्यतामखिलब्रह्मविदां पुरःसरः ।
सुमतिः समलोष्टकाञ्चनः श्रुतयोऽपि स्तुवते यदीहितम् ॥ ५३ ॥

उभयं किल यस्य मन्दिरे महदाश्चर्यमिदं प्रचक्षते ।
महितं धनुरैन्दुशेखरं मखभूमेरुदिता च कन्यका ॥ ५४ ॥

---
१. 'द' ख. पाठः.

अधुना यजनाय दीक्षितः सुहृदस्यानुपहूतवानसौ ।
यदि कौतुकमस्य दर्शने समयस्तर्ह्ययमेव वामपि ॥ ५५॥

अथवा भवतोरदर्शनाद् व्यथते संप्रति जम्भजित्सखः।
तदमुं प्रगमय्य वां पुनर्जनकेन्द्रं परिवेषितास्महे ॥ ५६ ॥

अथ दाशरथिः कृताञ्जलिर्मुनिमेवं निजगाद सादरम्।
भगवन् ! मिथिलेन्द्रमीक्षितुं परमावामपि जातकौतुकौ ॥ ५७ ॥

निगमान्तनितान्तशीलनक्षपिताशेषभवाब्धिविप्लवाः ।
शमयेयुरमी विलोकिता अपि दोषान् किमुताभिवन्दिताः ॥ ५८ ॥

अथ नूतनभूतसर्जनक्रमविभ्यत्त्रिदशेन्द्रवन्दितौ ।
चरणौ तव यत्र तत्र हि प्रचुरा निर्वृतिरावयोरपि ॥ ५९ ॥

इति वादिनि लक्ष्मणाग्रजे सविशेषं प्रजहर्ष कौशिकः ।
अनुकूलतमे समीरणे सुतरां दीप्यत एव पावकः ॥ ६० ॥

अपरेद्युरथ प्रगे मुनिर्विहिताग्न्याहवनादिकक्रियः ।
सहशिष्यगणः सराघवो मिथिलां प्रास्थित साग्निसाधनः ॥ ६१ ॥

अथ तस्य सधर्मचारिणी परिवीता बहुतापसीजनैः ।
स्वपदार्पितदृष्टिरन्वगात् तपनो यत्र न तत्र किं प्रभा ॥ ६२ ॥

व्यतिलङ्घ्य सरित्सरोवनान्यभिपेदे परिवारवान् मुनिः ।
परमेश्वरमौलिमालिकाममलस्रोतसमभ्रनिम्नगाम् ॥ ६३ ॥

स जगाद मुदा कुमारकौ सरिदेषा पुरतो निरीक्ष्यताम् ।
अवतारयति स्म यां भुवं भुवनख्याततगुणो भगीरथः ॥ ६४ ॥

कमलासनकुण्डिकोदरादरविन्दाक्षपदाब्जमेयुषी ।
सदुदारपरागपाविता हरकोटीरशया विजृम्भते ॥ ६५ ॥

इदमम्भसि मज्जतां शिरांस्यधिरूढं न जहाति तानि तद्[1] ।
जटिलीकुरुते च तद्गुहानथ बध्नाति च तान् विलेशयैः ॥ ६६ ॥

मुनिवागमृतं निपीय तौ रघुसूनू विनयप्रसाधनौ ॥
अयमञ्जलिरम्ब ! जाह्नवीत्यभिधायातिचिरं प्रणेमतुः ॥ ६७ ॥



१. 'र' ख. पाठः.

अथ तामतिलङ्घ्य नौकया मुनिमिश्रेषु ततो गताध्वसु ।
समदृश्यत गौतमाश्रमः श्रमनिर्वापणयोग्यसन्निधिः ॥ ६८ ॥

अविलूनसमित्कुशं चिरादनुपात्तप्रसवद्रुमावृतम् ।
अपधूममिदं तपोवनं मुनिना केन मुने ! समुज्झितम् ॥ ६९ ॥

इति पृच्छति राघवे मुनिः स्मितपूर्वां गिरमभ्यभाषत ।
इह दीर्घतपा इति श्रुतो व्रतिनामग्रसरोऽवसच्चिरम् ॥ ७० ॥

अथ तस्य मुनेरहल्यया प्रियया भूदचलारिरुत्सुकः ।
विषमेषुशरा हि दुःसहा महतामप्यविवेकदायिनः ॥ ७१ ॥

अथ तेन समेत्य दूषितां प्रणिधानेन विबुध्य गौतमः ।
अशपद् गृहिणीमदृश्यतामधिगच्छेत्यमुतो ययौ च सः ॥ ७२ ॥

इह सास्ति शिलामयी त्वया पुनरस्यां तु पदं निधीयताम् ।
तव पादपरागसङ्गमो यदमुष्याः खलु शापनिष्क्रियः ॥ ७३ ॥

इति कौशिकशासनात् पदं निदधानेऽधिशिलं रघोः सुते ।
समवापि विधूतशापया रुचिरं रूपमहल्यया निजम् ॥ ७४ ॥

इह पांसुलवोऽप्यपांसुलामृषिपत्नीमकृतेति विस्मयः ।
अथवा न तु विस्मयो यतो मुकुरश्रीरमुना प्रकाश्यते ॥ ७५ ॥

अथ वामकरेण विश्लथं घननीलं चिकुरं निरुन्धती ।
इतरेण करेण तुङ्गयोः स्तनयोरावरणं वितन्वती ॥ ७६ ॥

अलकैरपिनद्धमौक्तिकैरलिकालम्बिभिरीषदावृतम् ।
जलदैरिव वीतबिन्दुभिः शशिबिम्बं दधती मुखाम्बुजम् ॥ ७७ ॥

निजपादनखेन्दुमण्डलेष्वकलङ्केष्वपि लाञ्छनायितान् ।
त्रपया नमितानना सती विकिरन्ती नयनांशुसञ्चयान् ॥ ७८ ॥

मृदुभिः कदलीव मारुतैरुपगूढा कलिताङ्गवेपथुः ।
मनसा प्रणिपत्य राघवं क्षणमात्रं मुनिगेहिनी स्थिता ॥ ७९ ॥

व्रज भामिनि ! भर्तुरन्तिकं तव पन्थास्तु शिवोऽस्त्वितीरिणा ।
मुनिनानुमता पतिं प्रति प्रययौ सा तटिनीव सागरम् ॥ ८० ॥

गाधेः सुतस्तदनु सानुजरामभद्र-
सौशील्यसौभगनियन्त्रितचित्तवृत्तिः ।
अज्ञातलङ्घितपथो मिथिलोपकण्ठ-
मभ्याससाद मुनिरभ्यधिकप्रसादः ॥ ८१ ॥

जनकनगरमुद्यत्केतुनृत्यत्पताकं
कनकमणिमरीचिव्रातनीराजिताभ्रम् ।
प्रमुदितपुरनारीभासुरानेकसौधं
सपदि स विजगाहे सङ्गतो राघवाभ्याम् ॥ ८२ ॥

इति श्रीमद्रामपाणिवादविरचिते राघवीये महाकाव्ये
तृतीयः सर्गः ॥

---

## अथ चतुर्थः सर्गः ।

ततः प्रतीहारनिवेदितागमं
मुनिं प्रतीयाय विदेहभूपतिः ।
पुरोहितेनाङ्गिरसेन सङ्गतः
पितामहं नाथ इवामृतान्धसाम् ॥ १ ॥

स तं समभ्यर्च्य यथाश्रुतं कृती
निजावरोधाहिततत्कुटुम्बकः ।
सभामुपानीय च मानितासनं
प्रणम्य सीरध्वज एवमूचिवान् ॥ २ ॥

असंशयं जन्मसहस्रसञ्चितैः
सुकर्मभिर्मे फलितं महामुने ! ।
यदद्य दृष्टोऽसि कृशाश्वजन्मनां
श्रुतोत्कराणां त्रिनियोगभाजनम् ॥ ३ ॥

प्रदह्य यः क्षत्रियगोत्रजं वपु-
स्तपोमयेनोज्ज्वलितेन वह्निना ।
अविन्दत ब्राह्ममजिह्मवर्चसं
नमोऽस्तु तस्मै भवते महात्मने ॥ ४ ॥

त्रिशङ्कुयाजिन्नखिलं चराचरं
   जगत् सिसृक्षात्वपरं किल त्वयि ।
चतुर्मुखीतोऽपि समं विनिःसृताः
   स्खलत्पदाश्चाद्गिरः प्रजापतेः ॥ ५ ॥

अथाब्रवीद् गाधिसुतः सगौरवं
   नरेन्द्र! कस्त्वां निपुणः प्रशंसितुम् ।
स याज्ञवल्क्यो मुनिरस्तकल्मषां
   यमात्मविद्यां स्वयमध्यजीगपत् ॥ ६ ॥

सनैचर्याणि यजूंषि संयमी
   ववाम मूर्तानि किल प्रभाववान् ।
विदुस्तदन्तेवसतां भवादृशां
   परं तु तान्येव चरित्रमद्भुतम् ॥ ७ ॥

ततो नरेन्द्रस्तदुपान्तमागतौ
   कृतप्रणामौ विनयातिसुन्दरौ ।
कुमारकौ वीक्ष्य कुमारसन्निभौ
   तमन्वयुङ्क्त स्फुटरूढकौतुकः ॥ ८ ॥

इमौ समानव्रतवेषभूषणौ
   कुमारकौ कौ कमलायतेक्षणौ ।
कराञ्चले पिप्पलदण्डमण्डितौ
   निषङ्गिणौ क्षत्रियगोत्रजौ ध्रुवम् ॥ ९ ॥

प्रशंसनीयः कतमोऽयमन्वयः
   प्रकृष्टधाम्नोरनयोः समुद्भवात् ।
अशेषलोकोदयजागरूकयोः
   पयोनिधिः कौस्तुभचन्द्रयोरिव ॥ १० ॥

त्वया धृतं पूर्वमविक्षतं क्वचि-
   न्निवेशितं ब्राह्मणभूयमीयुषा ।
महन्महः क्षत्रमयं यदुज्ज्वलं
   द्विधा कृतं तत् किमिदं सविग्रहम् ॥ ११ ॥

अथ प्रहृष्यन् मुनिरेवमब्रवी-
दमू कुमारौ खलु तस्य भूपतेः ।
पुलोमजामप्यवरोप्य यः स्वयं
निजासनार्धे हरिणाधिरोप्यते ॥ १२ ॥

सुरारिनारीनयनाम्बुदुर्दिनं
करोति यो वीरवरो रसातलम् ।
स भूपतिः पङ्क्तिरथः प्रयत्नवान्
क्रतुं वितन्वंश्चतुरः कुमारकान् ॥ १३ ॥

स रामभद्रोऽयमयं च लक्ष्मणो
मम क्रतुत्राणदृढव्रताविमौ ।
सुबाहुमुख्याशरहव्यनिर्वृतं
युधि व्यधातां निजबाणपावकम् ॥ १४ ॥

ततो विदेहाधिपतिस्तमूचिवा-
नहो दृशौ सिद्धफले चिराय मे ।
श्रुती पुरैवाभवतां सुबाहुजौ
भुजौजसा यत् प्रथितात्रिमौ श्रुतौ ॥ १५ ॥

धिगस्मदीयामसमीक्ष्यकारिता-
मुदारसम्बन्धनिबन्धनासहाम् ।
।सनारोपणशुल्कदुर्घटं
सुतार्पणं यत् प्रथमं प्रतिश्रुतम् ॥ १६ ॥

तदाविरस्तु त्रिपुरारिकार्मुकं
दृढेन शिञ्जाभुजगेन वेष्टितम् ।
करोतु रामश्च निजं भुजाबलं
कृतार्थमस्मिन्निति कौशिकोऽवदत् ॥ १७ ॥

जगाद वाचं जनको महामुने !
क्व तादृशी भाग्यसमृद्धिरस्य मे ।
यया हि रामः परिणीय जानकीं
स्नुषामिमां भावुमतो विभाव्यति ॥ १८ ॥

इदं तदेवात्मसुवा विनिर्मितं
सुरासुराधीशदुरानमं धनुः ।
यदस्त्रवह्निर्गमितः पिनाकिना
पुराङ्गनाभर्तृवियोगवह्निताम् ॥ १९ ॥

सुरद्विषां प्राणसमीरणैश्च यत्
पिपर्त्ति शिञ्जापवनाशनोदरम् ।
करोति यच्च क्षितिभोजिनां भुजान्
निजायशोरूपकिणाङ्कपङ्किलान् ॥ २० ॥

स देवराते मम पूर्वपूरुषे
पुरा निचिक्षेप पुरारिरेव यत् ।
मया तु मूढेन पणीकृतं मुने!
तदेव सीताकरपीडनं प्रति ॥ २१ ॥

क्व रामबाहुर्बिसकाण्डकोमलः
क्व चान्द्रचूडं त्रिपुरेन्धनं धनुः ।
इमार्भकेण व्यपदेशगौरवा-
न्महीध्रमुद्धारयितुं किमीहसे ॥ २२ ॥

ततः शतानन्द इदं वचोऽवदत्
कृतं नरेन्द्राजगवप्रशंसया ।
प्रमाणमस्माकमयं हि कौशिको
धनुस्तदत्रोपचकास्तु सर्वथा ॥ २३ ॥

किमद्भुतं तद् यदिहापरे नृपाः
पराङ्मुखास्ते तु न सूर्यवंशजाः ।
अकुम्भजन्मा कतमः प्रगल्भते
प्रमातुमम्भश्चुलुके महोदधेः ॥ २४ ॥

प्रसिद्धमेतद् रघुवंशजन्मना-
मनादृताकारवयस्कमूर्जितम् ।
कणोऽपि वह्नेरखिलं हि काननं
दहत्यतोऽन्यत् खलु कर्म तेजसाम् ॥ २५ ॥

अथादिदेश क्षितिपः शरासनं
तदग्रसत्ता हरतेति किङ्करान् ।
परस्सहस्रेण च तैरुपाहृतं
समुन्नतं रङ्गमलञ्चकार तत् ॥ २६ ॥

स रामभद्रं निजगाद कौशिको
धनुस्तदारोपय वत्स! सत्वरम् ।
यदर्चितं सादरमद्रिजन्मनो
नमस्कृतं यच्च सदापि नन्दिना ॥ २७ ॥

अकुण्ठलम्बोदरकण्ठगर्जित-
प्रतिध्वनज्ज्याभुजगं पुरद्रुहः ।
गुरोर्भृगूणामधिपस्य दुर्धरं
धनुर्धरैराशु गृहाण कार्मुकम् ॥ २८ ॥

इति ब्रुवाणे गतसंशये मुनौ
विषादचिन्ताविवशे च मैथिले ।
निधाय सौमित्रिमुखे विलोचने
विहस्य गूढं रघुसूनुरुत्थितः ॥ २९ ॥

वसुन्धरालग्नशिखण्डकेन स
प्रणम्य मूर्ध्ना कुशिकान्वयध्वजम् ।
नृपं च सीरध्वजमाशिषस्तयो-
रवाप्य च प्रास्थित चापमण्डपम् ॥ ३० ॥

स रङ्गमारुह्य निभालयन् धनु-
र्ननाह पूर्वं नयनांशुशिञ्जया ।
प्रदक्षिणीकृत्य कृताञ्जलिस्तत-
स्तदाशु वामेन भुजेन चाददे ॥ ३१ ॥

अथास्फुरद् दक्षिणमक्षि तत्क्षणं
रघुप्रवीरस्य शुभस्य लक्षणम् ।
अदक्षिणं किन्तु विदेहजन्मनो
मनस्तयोरुत्सुकयोरुदश्वसीत् ॥ ३२ ॥

पुरारिचापस्य च भार्गवस्य च
स्थिरं शिरस्तन्नमयाञ्चकार ।
गुणं समारोपयदेकतस्ततः
परत्र दोषं यशसो निवर्तनात् ॥ ३३ ॥

अथ त्रिनेत्राङ्गुलिभस्मरूषितां
चकर्ष रामः स्वकरेण शिञ्जिनीम् ।
प्रसूनबाणाशुगवह्निशोषितां
धियं च भूमेर्दुहितुः सविभ्रमम् ॥ ३४ ॥

तदत्रुटच्छत्रुभयङ्करं धनु-
र्मनुप्रवीरस्य करेण कर्षितम् ।
तदुत्थितश्च ध्वनिरष्टदिग्गजां-
श्चकार शुष्यत्करटावटान् भिया ॥ ३५ ॥

मुरारिकण्ठीरवभैरवारवा-
नसस्मरच्च द्रुहिणं स हि क्षणम् ।
कुलाद्रिरन्ध्रप्रतिनादमेदुरो
निरास शब्दान्तरसावकाशताम् ॥ ३६ ॥

पिनाकखण्डाश्रितपाणिपल्लवं
त्रपानतग्रीवमुदग्रवर्चसम् ।
रघुप्रवीरं वरणस्रजेव सा
कटाक्षलक्ष्म्यावृत राजकन्यका ॥ ३७ ॥

ददौ विदेहाधिपतिस्तदैव तां
तदाश्रये पूजितसर्वदैवताम् ।
धियैव तस्मै त्रुटितैशधन्वने
विरोधिसेनामदवारिधन्वने ॥ ३८ ॥

पुरोधसं गौतममेव स द्रुतं
प्रयापयामास च कोसलान् प्रति ।
सहात्मजः पङ्क्तिरथः ससैनिकः
सहावरोधः समुपैतु मामिति ॥ ३९ ॥

ततः प्रयाते मुदिते पुरोहिते
नृपः स रामं परिरभ्य वक्षसा ।
शनैरुपाघ्राय च मूर्ध्नि वासिते
सुरास्तकल्पप्रसवैरवोचत ॥ ४० ॥

चिराय पूर्णाः खलु मे मनोरथा
यथासुखं वत्स ! रमस्व मत्पुरे ।
न केवलं त्वद्वशगास्य जानकी
सकोशदण्डं मम राज्यमप्यदः ॥ ४१ ॥

अवेहि जामातरशेषमैहिकं
सुखं निरस्यन्नपि तर्ह्ययं जनः ।
गुणैस्त्वदीयैर्विनियम्य पातितो
ममत्वसिन्धौ मनुजेन्द्रनन्दन ! ॥ ४२ ॥

इति ब्रुवन्नुज्ज्वलरत्नदीपिकं
प्रवेशयामास गृहं स राघवौ ।
रविश्च पाश्चात्त्यगिरेरधित्यका-
माधिष्ठितः प्रस्फुरदोषधिद्रुमाम् ॥ ४३ ॥

अथान्धकारच्छलनीलवाससा
समावृता पूर्वदिगङ्गना शनैः ।
प्रतीक्षते स्मोदयशैलकानने
रहःपतिं वारवधूरिवोडुपम् ॥ ४४ ॥

ततः स गाधेस्तनयो महामुनि-
र्विधाय सान्ध्यं विधिमग्निवेश्मनि ।
वसन् विदेहक्षितिशासिना समं
निनाय रात्रिं निगमान्तचिन्तया ॥ ४५ ॥

स गौतमस्तावदुपेत्य सत्वरं
पुरीमयोध्यामजराजसूनवे ।
निवेदयामास शरासभञ्जनं
नृपाय तस्मै नृपवाचिकं च तत् ॥ ४६ ॥

चचाल स क्षोणिपतिः ससैनिको
मुदा विदेहान् प्रति सावरोधकः ।
वसिष्ठमिश्रैर्गुरुभिश्च संयुतः
सहात्मजाभ्यां च समं च मन्त्रिभिः ॥ ४७ ॥

अवाप च द्वित्रदिनैर्निमेः पुरं
परिष्कृतं माल्यदुकूलकेतुभिः ।
सुगन्धिकालागरुसारधूपितं
विभूषिताङ्गप्रमदानिरन्तरम् ॥ ४८ ॥

अनेकसांवत्सरिकानुचिन्तित-
प्रशस्तवैवाहिकलग्नसौष्ठवम् ।
नदन्मृदङ्गं नदद‌ङ्गनाजनं
घनध्वन(न्दु ? द्दु)न्दुभितालकाहलम् ॥ ४९ ॥

ततो विदेहाधिपपूजितोऽवस-
न्महासने पङ्क्तिरथो महारथः ।
नितान्ततुष्टौ च वसिष्ठगौतमौ
प्रतुष्टुवाते हवनादिकाः क्रियाः ॥ ५० ॥

क्रमेण गोदानविधौ समापिते
कुमारकाणां मिथिलापुरन्दरः ।
अदत्त रामाय सुतामयोनिजां
ततः सुमित्रातनयाय चोर्मिलाम् ॥ ५१ ॥

कुशध्वजस्यात्मकनीयसः सुता-
मयच्छदग्र्यां भरताय माण्डवीम् ।
ततोऽनुजातां श्रुतकीर्त्तिमर्पयं-
श्चकार शत्रुघ्नमपि प्रियासखम् ॥ ५२ ॥

समित्समिद्धे सुहुते हुताशने
मुनौ च दीप्तत्विषि गाधिनन्दने ।
स्थिते पुरः साक्षिणि राजसूनवः
क्रमेण पाणौ जगृहुः कुमारिकाः ॥ ५३ ॥

स यौतकद्रव्यमसङ्ख्यमार्पिपद्
द्विपाश्वपादातरथादिकं नृपः ।
शतं सखीनां च विभूषणोज्ज्वलं
वधूवरेभ्यः परितुष्टमानसः ॥ ५४ ॥

अथाब्रवीदुत्तरकोसलेश्वरं
करे करेण प्रतिगृह्य मैथिलः ।
निमेरिदं सच्चरितोज्ज्वलं कुलं
चिराय राजंश्चरितार्थतामगात् ॥ ५५ ॥

सुकर्मभिः शान्तिकपौष्टिकैरयं
प्रशास्ति यन्नित्यमरुन्धतीपतिः ।
अयं च गाधेस्तनयो महातपा
यदन्वहं वर्धयति स्वतेजसा ॥ ५६ ॥

तदेतदिक्ष्वाकुकुलं प्रसाधितं
भवद्यशोभिः शशिखण्डपाण्डरैः ।
अवाप्तसम्बन्धतया पुनाति मां
यदाश्रयादार्जति धर्ममाश्रयी ॥ ५७ ॥

ततः समामन्त्र्य सहात्मजौ नृपौ
विशिष्य संश्लिष्य च रामलक्ष्मणौ ।
वियोगदुःखाश्रुमुचि स्वमाश्रमं
सदारशिष्ये कुशिकात्मजे गते ॥ ५८ ॥

स राजसिंहो नमुचिद्विषः सखा
सहात्मजैरात्मसरूपजानिभिः ।
चतुर्भिरथैरिव पौरुषैर्वशी
मिथोऽनुरक्तैः स्म पुरीं प्रतिष्ठते ॥ ५९ ॥

तमन्वयासीज्जनकः ससैनिकः
स्वसैनिकव्रातपुरस्सरं नृपम् ।
अलङ्कृतोत्तुङ्गतुरङ्गपृष्ठगः
सुवर्णपूर्णद्विपकण्ठगामिनम् ॥ ६० ॥

प्रवृद्धतूर्यध्वनिरुद्धदिक्तटैः
कटस्फुरत्कुम्भिघटानिरन्तरैः ।
तरङ्गसङ्काशतुरङ्गपङ्क्तिभि-
र्बलार्णवैस्तस्य वृता वसुन्धरा ॥ ६१ ॥

पदातिपादाहतिभिन्नभूतल-
प्रसृत्वरैः केतुपटानिलोच्छ्रितैः ।
रजोभिरानेपत वारितातपै-
स्तदातपत्राण्ययथार्थनामताम् ॥ ६२ ॥

सखड्गभाभिः सितचामरोत्करैः
करैरिवेन्दोः सकलङ्ककान्तिभिः ।
सनीलकण्ठैः कलहंसमण्डलैः
सरस्तटानीव बलानि रेजिरे ॥ ६३ ॥

नदीनदारण्यनिरन्तरेष्वथो
विलङ्घितेष्वध्वसु राजसैनिकैः ।
अदृश्यताग्रे भृशमुज्ज्वलन् क्रुधा
कुठारपाणिर्भगवान् भृगूत्तमः ॥ ६४ ॥

नराधमास्तिष्ठत तिष्ठत क्षणं
क याथ कृत्वा मम तावदप्रियम् ।
स कुत्र कुक्षत्रियडिम्भकोऽद्य मे
गुरोरभाङ्क्षीत् किल यः शरासनम् ॥ ६५ ॥

ममाखिलक्षत्रियकण्ठलुण्ठन-
प्रशस्तधारः परशुर्विजृम्भते ।
इति ब्रुवाणः सधनुःशिलीमुखो
रुरोध राज्ञः सरणिं महामुनिः ॥ ६६ ॥

ससम्भ्रमं पङ्क्तिरथो मतङ्गजा-
दथावरुह्य प्रणनाम साञ्जलिः ।
मुनिस्त्वनादृत्य तमन्यतो व्रज-
ञ्जगाद रामं गुरुगर्वदुर्वहः ॥ ६७ ॥

अरे नरेन्द्रार्भक ! मेरुधन्वनो
धनुर्ग्रहीतुं व्यवसायिना त्वया ।
न भार्गवस्य क्षितिपालघस्मरः
कथं कुठारः स्मृतिगोचरीकृतः ॥ ६८ ॥

स खल्वयं दारुणकर्मकर्मठः
कठोरवीरव्रतधारणो[1] मुनिः ।
कृतापराधः कृतवीर्यनन्दनः
कृतात्मना येन कृतान्तसात्कृतः ॥ ६९ ॥

अभिन्त यः क्रौञ्चमभिन्नविक्रमः
कुमारसाक्षात्कृतरूक्षकर्मभिः ।
अशेषराजन्यशिरोमणिस्खल-
ज्ज्वलत्तमक्रूरमुखैः शिलीमुखैः ॥ ७० ॥

तथोग्रधाम्नो मम नाम नाम य-
ज्जगत्त्रये राम इति प्रथां गतम् ।
तदद्य खद्योत इवायथार्थकं
बिभर्षि धिग् धर्षितपौरुषः परैः ॥ ७१ ॥

अथाब्रवीद् दाशरथिः कृताञ्जलि-
र्नमोऽस्तु ते निस्तुलबाहुतेजसे ।
क्षमस्व रामस्य विवेकमन्थरं
निरङ्कुशस्यास्य भुजस्य चापलम् ॥ ७२ ॥

अनायि निःक्षत्रियतां धरातलं
जितश्च केलीकलहे षडाननः ।
इति त्वदीयानि यशांसि नादृता-
न्यहो मया मुग्धधिया तदन्तरे ॥ ७३ ॥

स रेणुकायां बहुविक्रमो भवा-
नभूदतो वीरवरप्रसूरसौ ।
अचिन्त्यमाहुर्भवतो विचेष्टितं
हिनस्ति हिंसापि न यद् द्विजव्रतम् ॥ ७४ ॥

१. 'यो' क. पाठः 

स इत्थमाकर्ण्य विघूर्णितः क्रुधा
निटालबद्धभ्रुकुटीपुटो मुनिः ।
जगाद रे रे रघुवंशपांसन!
प्रकत्थसे किं किमिदं मदग्रतः ॥ ७५ ॥

अयं कुठारस्तव कण्ठकन्दलीं
छिनत्तु मृत्युञ्जयकार्मुकच्छिदः ।
हिनस्त्वतृप्यन्नमुनापि कर्मणा
समस्तमिक्ष्वाकुविदेहयोः कुलम् ॥ ७६ ॥

अभेदमारोपय वैष्णवं धनु-
र्धनुर्धरंमन्य! किमन्यकर्मभिः ।
इहापि ते बाहुबलं क्रमेत चे-
दपि स्ववैरी बहुमंस्यसे मया ॥ ७७ ॥

ततः स रामो मुनिनार्पितं धनुः
प्रणम्य जग्राह समग्रसम्मदः ।
भृशं दिदीपे च निजेन तेजसा
ततो हृतेनार्क इवाग्नितः प्रगे ॥ ७८ ॥

अथाततज्यं च विधाय सत्वरं
तदाददे सायकमायतेक्षणः ।
रुरोध चास्योर्ध्वगतिं तदाज्ञया
विकृष्य मुक्तेन च तेन राघवः ॥ ७९ ॥

ततः प्रहृष्टो जमदग्निनन्दनः
प्रमोदबाष्पप्रसराविलेक्षणः ।
चिरं परिष्वज्य नरेन्द्रनन्दनं
जगाद लिम्पन्निव दन्तरोचिषा ॥ ८० ॥

अये चिरं जीव कुमार! तन्महो
महोज्ज्वलं तावकमद्य वीक्षितम् ।
दिदृक्षमाणेन यदुच्चकैर्मया
धुतोऽसि दीप्ताक्षररूक्षया गिरा ॥ ८१ ॥

हिमकरद्युतिजालसनाभिभि-
निर्जयशोभिररातिजयोद्भवैः ।
दश दिशो विशदीकुरु भूयसा
दशरथात्मज! मङ्गलमस्तु ते ॥ ८२ ॥

इति वदञ्जमदग्निसुतो मुनि-
र्नृपसुतं परितोष्य तिरोदधे ।
परिगतार्थतया मुदिताशयं
पितरमेत्य ननाम स चादरात् ॥ ८३ ॥

समन्तादुत्सर्पत्पटुपटहभेरीकलकल-
प्रतिध्वानोद्बुद्धक्षितिधरगुहासुप्तहरिभिः ।
समं सैन्यैरन्यैरपि नृपकदम्बैर्निजपुरी-
मयोध्यामभ्यायादनुगततनूजो दशरथः ॥ ८४ ॥

इति श्रीमद्रामपाणिवादविरचिते राघवीये महाकाव्ये
चतुर्थः सर्गः ।

---

## अथ पञ्चमः सर्गः ।

तत्र तावदरमन्त कुमाराः[1] मारदाररुचिभिः सुकुमाराः ।
वल्लभाभिरुचिताभिरुदारप्रेमकामरमणीयतमाभिः ॥ १ ॥

आभिजात्यनिभृतस्मरवेगैर्व्रीलकैतवनिचोलनिगूढैः ।
अर्धमार्गविनिवृत्तकटाक्षैर्विभ्रमैर्बभुरमीषु नवोढाः ॥ २ ॥

सर्वनिर्वृतिकरैरभिरामं सद्गुणैर्मधुनिशेव शशाङ्कम् ।
रामभद्रमभिकं लभमाना भामिनी भृशमशोभत सीता ॥ ३ ॥

उत्सुकं च हृदयं निजमुच्चैर्दक्षता च नवनर्मणि पत्युः ।
अक्षमश्च मदनो मदिराक्ष्या व्रीलितं लघयति स्म कथञ्चित् ॥४॥

केलिशैलमणिसौधवनालीवापिकातटनिकुञ्जगृहेषु ।
क्रीडतोर्जनकजारघुसून्वोरत्ययुः क्षणनिभाः शरदोऽपि ॥ ५ ॥

---

१ 'निजक' ख. पाठः.

आययावथ कदाचिदयोध्यां केकयक्षितिपतिः स युधाजित् ।
यत्कृपाणलतिका रिपुकण्ठे स्ववधूवरणदाम बभूव ॥ ६ ॥

स क्षमातलमहेन्द्रमुपेत्य प्राञ्जलिर्भरतमातुल ऊचे ।
भूमिपालकुलमौलिमणे ! त्वां प्रार्थये किमपि लोकशरण्यम् ॥ ७ ॥

लक्ष्मणानुजयुतो भरतोऽयं प्रेष्यतां सपदि मातृकुलाय ।
पौरनेत्रकुमुदानि धिनोतु द्रागमुष्य मुखचन्द्रमयूखः ॥ ८ ॥

एवमुक्तवति केकयराजे पुत्रयोर्विरहदुःखमसह्यम् ।
सोढुमेव निरचेष्ट विधातुर्वामतामभिमुखे स विविश्वन् ॥ ९ ॥

प्रेषितं दशरथेन कथञ्चित् सानुजं भरतमाशु गृहीत्वा ।
केकयाधिपतिरात्मनिकेतं प्रीतपौरजनमाविशति स्म ॥ १० ॥

नीतिमानथ सुमन्त्रपुरोगान् मन्त्रिणो नृपतिरेवमवादीत् ।
कर्णजाहपलितंकरणी मे विस्रसा वदति वो मतिमन्तः ॥ ११ ॥

अर्चितापि ललितैरुपचारैर्लम्भितापि चिरमङ्कनिवासम् ।
वार्धके युवरता गणिकेव स्थैर्यमावहति जातु न लक्ष्मीः ॥ १२ ॥

विस्रसातरलितेन भुजेन भ्रश्यति प्रतिधृतापि धरित्री ।
साधनस्य खलु दुर्बलतैव व्यर्थतां नयति साध्यसमृद्धिम् ॥ १३ ॥

भूमिभारमवतार्य चिरोढं रामभद्रभुजयोः स्वभुजाभ्याम् ।
योगमार्गतरुमूलनिलीनाश्चिन्मयानिलमुपाश्रयिताः स्मः ॥ १४ ॥

नन्दने परिचिते सुमनोभिश्चन्द्रकान्तहरिचन्दनशीते ।
अत्र नन्दतु चिराय नृपश्रीर्नन्दने सुरवधूरिव रम्या ॥ १५ ॥

भानुबिम्बमुदयाद्रिरिवोच्चैर्मेरुशैल इव वासवसौधम् ।
राघवो वहतु सम्प्रति मूर्ध्ना राजितारुणमरीचि किरीटम् ॥ १६ ॥

आतपत्रमुपरि ध्रियमाणं शुभ्रकान्ति शरदभ्रनिकाशम् ।
आकलय्य विकसन्तु नितान्तं चामरव्यजनबालमरालाः ॥ १७ ॥

अम्बुजासनकमण्डलुगर्भाज्जाह्नवीयमिव मूर्ध्नि हिमाद्रेः ।
रत्नकुम्भकुहरान्मम सूनोः सारवं पततु सारवमम्भः ॥ १८ ॥

तद्यतध्वमभिषेकपदार्थानाशु हर्तुमभियाति मुहूर्तः ।
अस्तु सिद्धिरथवा भवदीया नीतिदृष्टिरनुपश्यति सर्वम् ॥ १९ ॥

मन्त्रिबुद्धिरवनीपतिबुद्धेः शुद्धकृत्यपदवीषु पथिक्या ।
विभ्रमद्रुमतटी न पटीयस्यात्मनेति निजगाद सुमन्त्रः ॥ २० ॥

वर्ततां वत कियच्चिरमेषा रामभद्रमनुपाल्य वराकी ।
श्रीः स्वयं नृवर ! वासकसज्जा युज्यते तव तु धीरिति चासौ ॥ २१ ॥

रामभद्रमभिषेक्ष्यति राजा यौवराज्य इति राज्यविरूढा ।
केवलं न भुवमद्भुतवार्ता व्यानशे दिवमपि श्रुतिमाध्वी ॥ २२ ॥

भूयसी तदनु संमदलक्ष्मीः सर्वतो भुवनवासिजनानाम् ।
कौमुदीव कुमुदानि चकार स्मेरतोदितसुखानि मुखानि ॥ २३ ॥

केतुदण्डपरिणद्धपताका वीरुदारुणितवंशकदम्बा ।
कुङ्कुमारुणमणिस्थलधातुः सा रराज नगरी नगरीति ॥ २४ ॥

धूपितागरुपलङ्कषधूमस्तोमधूमलविभासु सभासु ।
चित्रमाल्यपरिक्लृप्तवितानस्फीतकान्तिमधुरेषु पुरेषु ॥ २५ ॥

उद्धतध्वनितशङ्खमृदङ्गे मङ्गले समुपयाति मुहूर्ते ।
रामचन्द्रवदनाब्जदिदृक्षाजातकौतुकघनेषु जनेषु ॥ २६ ॥

उत्सवश्रवणमेदुरमोदास्निग्धबुद्धिमथ केकयपुत्रीम् ।
मन्थरेति किल काचन दासी मन्थरेतरमुपेत्य बभाषे ॥ २७ ॥

स्थान एव तव हर्षविकारश्चारुगात्रि ! भरतस्य सवित्रि ! ।
एष राममभिषिञ्चति राजा सौभगं प्रचलितं तव मूढे ! ॥ २८ ॥

यत्र वत्सलतया तव माता चुम्बति स्म मुहुरम्बुजनेत्रे ! ।
तत्र ते शिरसि कोसलपुत्री वामपादमधुना निदधाति ॥ २९ ॥

राममातुरसि सम्प्रति दासी हा ममापि महती परिभूतिः ।
धिक्कृतासि मुषितासि हतासि भ्रंशितासि लघितासि सपत्न्या ॥

एवमुक्तिभिरचुक्षुभदन्तर्मन्थरा भरतमातुरपङ्कम् ।
हस्तिनी चपलहस्तचपेटालोलनाभिरिव सारसमम्भः ॥ ३१ ॥

कोसलाधिपसुताकमितारं प्रापयाशु सविधं मम कुब्जे ।
इत्यचोदयदसावथ दासीमानिनाय लघु सा च नरेन्द्रम् ॥ ३२॥

सम्प्रविश्य गृहमाकुलकेशीमश्रुभिः स्नापितमुग्धमुखेन्दुम् ।
भूमिरेणुपरिधूसरगात्रीमीक्षते स्म पुरतो नृपपुत्रीम् ॥ ३३ ॥

भूपरागसहितापि शरीरे भूपरागरहितेव हृदि त्वम् ।
कम्बुकण्ठि ! किमु रोदिषि मोदस्यावकाश इति पृच्छति भूपे ॥

कोपकम्पितरदच्छदयोद्यद्गद्गदा द्रुतमवादि तया गीः
आश्रुतं प्रथमतो वरयुग्मं यच्छ मे त्वरितमच्छलवादिन् !॥ ३५ ॥

तत्पुरा खलु सुरारिसमीकप्रापिता नृवर ! या तव मूर्च्छा ।
तां पटान्तमरुतापनुदत्यै दास्यसि स्मरसि सत्यधनो मे ॥ ३६ ॥

इत्थमद्य वरयोः स्थितिरिष्टा विष्टपं वहतु ते भरतोऽयम् ।
वत्सरानपि चतुर्दश रामः कानने वसतु वल्कलवासाः ॥ ३७॥

केकयेन्द्रदुहितुर्मुखगतादुत्सृता वरयुगद्विरसज्ञा ।
वाङ्मयी तमथ मूर्छयति स्म द्राङ् नरेन्द्रमपि कालभुजङ्गी ॥ ३८॥

तामुवाच विधुरागतसंज्ञो राज्ञि ! कर्कशतमासि किमेवम् ।
काममस्तु भरतो युवराजः काननं किमु निनीषसि रामम् ॥ ३९ ॥

हा कथं विपिनमृक्षतरक्षुव्यालकेलिखुरलीमयमेतु ।
तत् प्रसीद शुभचेतसि रामे वामभावमपहस्तय वामे ! ॥ ४० ॥

इत्युदीर्य पुनरृच्छति मूर्छामाधिबाधितधृतौ धरणीशे ।
ज्ञातहेतुरदसीयविमोहे प्राप्य तामिदमुवाच सुमन्त्रः ॥ ४१ ॥

जन्म केकयकुले विकलङ्के वल्लभो नृपतिरैन्दुमतेयः ।
नन्दनः शुभरतो भरतस्ते देवि ! चापलमिदं तु कुतस्त्यम् ॥ ४२ ॥

वज्रलेपघटितेव भवित्री निश्चला तव नितान्तमकीर्तिः ।
व्याकुलं नृपकुलं च फलं किं वीक्ष्य रूक्षचरिते निरतासि ॥ ४३ ॥

वैशसं पुनरिदं भरतेऽपि प्रस्फुरद्गुणसहस्रमयूखे ।
भास्वतीव तमसा कृतमुग्रं त्वत्कृतं किमपि न प्रसजेत् किम् ॥ ४४ ॥

उत्सवे जनदृशाममृतांशौ रामनामनि कलापरिपूर्णे ।
काननाऽपिहिते कथमेते जीवितं दधतु पौरचकोराः ॥ ४५ ॥

सञ्चिनोतु सुकृतानि रघूणां स्थेयसीं स्थितिमसावनुगृह्णन् ।
इत्यहं शिवमनाः खलु रामे कोऽत्र दोष इति सा तमवादीत् ॥ ४६ ॥

तावदक्षतनवांशुकवासा मङ्गलप्रतिसराञ्चितपाणिः ।
मातृमन्दिरमवाप्य स रामो वन्दते स्म जनकं जननीं च ॥ ४७ ॥

तं जगाद जननी जनकस्ते राम ! कोमलमतिः परिखिन्ने ।
आश्रुतस्य लघुनोऽपि विमोहादर्पणाद् वरयुगस्य बिभेति ॥ ४८ ॥

तत् पुनस्तव वनेषु निवासो भूपता च भरतस्य न चान्यत् ।
भारतीमिति निशम्य स मातुः सस्मितं मधुरस्मितमूचे ॥ ४९ ॥

आवयोरयमनुग्रह एव प्रार्थितो यदुभयोः शुभयोगः ।
सर्वतीर्थपरिशीलनतो मे वर्णरक्षणवशाद् भरतस्य ॥ ५० ॥

दुर्धरोऽपि धरणीतलभारो नातिविह्वलयिता खलु वत्सम् ।
तस्य हस्तमवलम्बितुमम्ब ! स्थैर्यमेष्यति ममापि तपो यत् ॥ ५१ ॥

ध्यातमात्रशुभदानि मुनीनामास्पदानि विपदामपदानि ।
आश्रय त्वमिति चोदितवत्या पावितोऽस्मि सुभृतोऽस्मि भवत्या ॥

यस्य पूर्वपुरुषैर्गुरुभक्त्या यादसां पतिरखानि सुखेन ।
तेन हि स्वतनुपालनमात्रं दुर्वहं कथमहो पितुरर्थे ॥ ५३ ॥

इत्युदीर्य पितरावभिवाद्य प्रीतिफुल्लवदनाम्बुजलक्ष्मीः ।
प्रस्थितः प्रणयिनीमनुरोद्धुं प्राप दाशरथिरात्मनिकेतम् ॥ ५४ ॥

सा तु भर्तुरभिषेकसरागा भूषणावलिमभूषयदङ्गैः ।
पल्लवैः सुरभिमाससकामा पुष्पसम्पदमशोकलतेव ॥ ५५ ॥

आलिलालितमनोज्ञविलासामाससाद रमणीं रघुवीरः ।
अङ्कतल्पमधिरोप्य च लज्जानम्रकम्रवदनामिदमूचे ॥ ५६ ॥

न श्रुतः किमभिषेकविभङ्गो भङ्गुरोदरि ! ममायममायः ।
आरुरोपयिषितं [illegible] यतो गाम् ॥ ५७ ॥

वत्सला खलु तनूजचतुष्के पुष्कलेऽपि मम मध्यममाता ।
राज्यधूर्वहनवागुरिकातो वारितो यदनया कृपयाहम् ॥ ५८ ॥

तत्र वत्सभरतः प्रणियुक्तः प्राज्यराज्यभरणे करणीये ।
हायनानि च चतुर्दश पुण्ये चोदिता मम तु वृत्तिररण्ये ॥ ५९ ॥

आत्मने च जगते च हितं यद् यच्च शीलितचरं मम पूर्वैः ।
तत् तपश्चरितुमद्य वनान्तं प्रस्थितोऽस्मि गुरुशासनधारी ॥ ६० ॥

अत्र तावदथवा पितृगेहे कुर्वती गुरुपदां परिचर्याम् ।
वासरान् गमय धैर्यसहाया यावदेष जन एष्यति सीते ! ॥ ६१ ॥

शृण्वती पतिवचांसि वियोगात् त्रस्यति स्म जनकेन्द्रतनूजा ।
आतपादिव दिवा शशिलेखा तं जगाद च सगद्गदकण्ठी ॥ ६२ ॥

अत्र किं पितृगृहेऽपि किमस्यास्त्वत्पदाम्बुजमधुव्रतिकायाः ।
त्वन्मयाविकलजन्मफलायास्त्वत्सुधाकरचकोरदृशो मे ॥ ६३ ॥

ज्योत्स्नयेव गगनं मृगलक्ष्मा छाययेव च सहस्रमरीचिः ।
त्वं मया सह वनं विश विद्वन्नार्यपुत्र ! किमनार्यमिदं ते ॥ ६४ ॥

अब्रवीदथ रघुप्रवरस्तामद्य यद्यपि निनीषुरहं त्वाम् ।
नोत्सहे किमपि तत्र तथापि क्रूरसत्त्वमनुचिन्त्य वनान्तम् ॥ ६५ ॥

क्वासि नूतनशिरीषसनाभिः क्वाटवी च भूतहिंस्रसहस्रा ।
रूक्षपावकशिखावितती कः प्रक्षिपेत् सुतनु ! केसरमालाम् ॥ ६६ ॥

सा जगाद सुदती पदजन्मा यत्र यत्र तव कान्त ! परागः ।
तत्र तत्र मुदमृच्छति सीता दैवतं हि पतिरेव सतीनाम् ॥ ६७ ॥

धर्ममर्मगाधियोऽपि वियोगं भर्तुरादिशथ किं कुलवध्वाः ।
तत् प्रसीदत नयध्वमिमां मां क्वाद्य दीनकरुणा तरुणा वः ॥ ६८ ॥

एवमादिरुपपत्तिमती वागन्वमन्यत विदेहसुतायाः ।
राघवेण भवितव्यतया वा रावणस्य जगतः सुकृतैर्वा ॥ ६९ ॥

वन्दितुं पुनरुपक्रममाणो राघवः सह तया गुरुपादान् ।
निर्गतो निजगृहादभियान्तं लक्ष्मणं धृतशरासमपश्यत् ॥ ७० ॥

कुत्र धावसि कुमार! धनुष्मान् कोपकम्पित इवासि किमर्थम् ।
सानुयोगमिति भानुकुलेन्दुं स प्रणम्य निजगाद सगर्वम् ॥७१॥
येन भो! जडधिया विहितस्ते वीतशङ्कमभिषेकविभङ्गः ।
तस्य कण्ठमवलुम्पतु सद्यः संहितः शितमुखो विशिखो मे ॥७२॥
तिष्ठते यदि गुरुस्तरुणीनां वाचि साचितविवेकविमूढः ।
पारिभाषिकमिवास्य गुरुत्वं न त्वयं मम गुरुर्गुरुधामन् ॥७३॥
अग्रजे सति करग्रहमिच्छुर्यः श्रियः स न कथं परिवेत्ता ।
आततज्यमिदमन्तकदंष्ट्रावज्रकोटिकुटिलं धनुरस्मै ॥ ७४ ॥

इत्युदग्रपरुषाक्षरवाचं रोषताम्रनयनं प्रियरामम् ।
भाषितैः सरससान्त्वनपूर्वैस्तं प्रशान्तमकरोद् रघुवीरः ॥ ७५ ॥
तं पुनर्निजगिरामपि भेदैरश्लथानुगमनव्यवसायम् ।
पादयोर्निपतितं करुणावानस्तु ते रुचितमित्यनुमेने ॥ ७६ ॥
तेन साकमुपसृत्य सदारस्तातमातुरधियं स ववन्दे ।
अस्तु मानद! शिवस्तव पन्था इत्युवाच मनसा स न वाचा ॥७७॥
स्वस्थतां गमयितुं मम तातं त्वं यतस्व जननीति वदन्तम् ।
एष एव मम यत्न इतीमं प्राह केकयसुता नियतिश्च ॥ ७८ ॥
शासनं शिरसि माल्यमिवोढ्वा राघवः पितुरतीव जहर्ष ।
पङ्कजाकर इवोपरि भानोः प्रातरातपशिखानिकुरुम्बम् ॥ ७९ ॥

कोसलेन्द्रतनयामथ गत्वा सानुगो मगधजां च ननाम ।
ते स्नुतस्तनपयोनयनाम्भोनिर्झरैः सिषिचतुश्चिरमेनम् ॥८०॥
वत्स! राम! न दिनानि न मासा वत्सरास्तव चतुर्दश तेऽपि ।
विप्रवासगुरवो गुरुशिष्टाः कष्टमित्यरुदतां च जनन्यौ ॥ ८१॥
पुत्रि! जानकि! सतीव्रतमेतद् यत्तु पत्युरनुवर्त्तनमेव ।
भद्रमस्तु तव तत्र रतायाः सास्रमित्यवदतां च वचस्ते ॥८२॥
वत्स! लक्ष्मण! यथा तव रामो बान्धवश्च सुसखा च पिता च ।
जीवितं च हृदयं च तथैनं पश्य शश्वदिति चाशिषतां ते ॥८३॥

राघवावथ तयोः पदपांसुं जानकी च शिरसा प्रतिगृह्य ।
तं प्रणम्य च वसिष्ठमुनीन्द्रं प्रस्थितिप्रणयितां दधिरे ते ॥ ८४ ॥

वल्कलैर्निवसितैररुणैस्ते व्यद्युतन् विधुतपाण्डुदुकूलाः ।
प्रातरर्कमहसामिव वृन्दैर्निह्नुतेन्दुकिरणा हरिदन्ताः ॥ ८५ ॥

तावदक्रमकराकलितोरस्ताडनत्रुटितकङ्कणहारः ।
बाष्पकर्दमितभूमिरुदस्थात् सर्वतः सपदि पौरविलापः ॥ ८६ ॥

मा स्म नस्त्यजदनन्यशरण्यान् रामभद्र ! तव पादपरागः ।
एवमादि विलपन्नथ तेषां मार्गमावृत स पौरसमूहः ॥ ८७ ॥

तातसारथिसुमन्त्रसनाथं प्रारुरोह स रथं रघुवीरः ।
सीतया सह सहस्रमरीचिश्छाययेव गरुडाग्रजसूतम् ॥ ८८ ॥

पौरबाधमशनैरवधून्वँल्लक्ष्मणः सशरचापनिषङ्गः ।
अग्रतो रघुपतेरटति स्म ग्लानिहृद् दिवसभर्तुरिवोष्मा ॥ ८९ ॥

इङ्गुदीतरुनिरन्तरपार्श्वं धीररक्षिभटलक्षपरीतम् ।
तं निषादनृपतेरुपगङ्गं शृङ्गिबेरपुरमापुरथैते ॥ ९० ॥

प्राप्य राममनमद् गुहनामा नीतिमानथ निषादकुलेन्द्रः ।
सच्चकार सरसैः फलमूलैरासयच्च रुरुचर्मपुटे तम् ॥ ९१ ॥

इन्द्रनीलमणिनीलरुचो ये ये च वीचिपटलीकुटिलान्ताः ।
हन्त तेऽपि विधिना रघुसून्वोः कुन्तला जटिलिता वटदुग्धैः ॥ ९२ ॥

तां निशामथ कुशेशयतल्पे कल्पितेऽनुजसखेन गुहेन ।
सीतया सह सुखेन शयानो नास्मरन्निजपुरीं रघुवीरः ॥ ९३ ॥

प्रातर्निवर्त्य सरथं तरसा सुमन्त्रं
तातोपकण्ठमजहान्निवसेति धीरः ।
आरुह्य नावमचिरेण गुहोपनीतां
सीतासहोदरयुतः स ततार गङ्गाम् ॥ ९४ ॥

ततो भरद्वाजमुनेस्तपोवनं
हविस्सुगन्धि स्फुटधूमधूपलम् ।
अवाप्य नत्वा तमनेन दर्शितं
स चित्रकूटाचलमभ्युपेयिवान् ॥ ९५ ॥

इति श्रीमद्रामपाणिवादविरचिते राघवीये महाकाव्ये
पञ्चमः सर्गः ।

---

अथ षष्ठः सर्गः ।

अथ स तेन दृशाधिगतो गिरिः
शिखरमूलविलम्बिभिरम्बुदैः ।
कृतपतत्रतया कुलिशं हरेः
परिहसन्निव निर्झरवारिभिः ॥ १ ॥

मदकलद्विपदन्तमुखाहति-
क्षुभितधातुपरागमिषेण यः ।
तरुशतप्रसवोत्करतारकां
दिनविरामरुचिं वहति क्वचित् ॥ २ ॥

मणिशिलासु विलासवतीसखै-
र्मुखरझर्झरमूर्छितनिर्झरैः ।
कृतपदैर्मधु यत्र निपीयते
कुसुमजं भ्रमरैरिव किन्नरैः ॥ ३ ॥

महिषचक्रविषाणविघट्टन-
स्फुटितनाकुनिकेतनिरित्वरम् ।
दहति यत्र विषाग्निकणोत्किरै-
स्स्वकुलता: श्वसितैः फणिनां कुलम् ॥ ४ ॥

स्फटिकसानुषु भानुशतं क्वचिद्
वहति यः प्रतिबिम्बितकैतवात् ।
स्वतटनिष्कुटपुष्करणीरुहां
जलरुहां प्रियमाकलयन्निव ॥ ५ ॥

मरकतोपलभूमितलोत्थिता-
नविरतस्फुरणान् किरणोत्करान् ।
स्पृशति यत्र चलै रसनाञ्चलै-
र्नवतृणाङ्कुरशङ्कि मृगीकुलम् ॥ ६ ॥

असितरत्नभुवां घृणिमण्डली-
मपदिशन् निखिलस्तमसां गणः ।
वसति यत्र तपत्यपि भास्करे
बलवदाश्रयणादकुतोभयः ॥ ७ ॥

रणितकीचकसूचकसूचितो
विशति यत्र वनानि नभोनिलः ।
विहरणालससिद्धवधूमुख-
श्रमजलच्छलमौक्तिकतस्करः ॥ ८ ॥

मधुपकज्जलपुष्पविलोचना
विधुतकोमलबालदलाङ्गुलीः ।
नुदति यत्र स नर्त्तनकेलये
कलितताललयो लतिकाङ्गनाः ॥ ९ ॥

विकटगह्वरकुहरोदरशायिनो
मृगरिपोर्ध्वनिते सति सन्निधौ ।
भयविनष्टकलङ्कमृगो विधु-
र्वहति मुग्धवधूवदनोपमाम् ॥ १० ॥

चलकलिन्दसुताजलमेचकै-
र्नवपुलिन्दवधूकबरीभरैः ।
उपनिबद्धघनाभिगमभ्रमे
नटति यत्र कलापिकुलं क्वचित् ॥ ११ ॥

विपुलबालविलोपभयोद्भ्रम-
  च्चमरिकानयनोदकवृष्टिभिः ।
प्रतिहतः शममेति दवानलः
  सपदि यस्य महावनराजिषु ॥ १२ ॥

रुरुवधूः कुरुविन्दमणिस्थले
  न लभते पतितं पतिविग्रहम् ।
यदटवीषु किरातशरक्षत-
  क्षतजदिग्धमितोऽपि विचिन्वती ॥ १३ ॥

तमसि यत्र महौषधयोऽधिकं
  दिशि दिशि ज्वलिताः प्रतिरुन्धते ।
निभृतचारिवनेचरबन्धकी-
  कुलमवाप्तुमिवात्मपतेर्व्रतम् ॥ १४ ॥

महति यत्र सुवर्णलतागृहे
  चलितकङ्कणनूपुरशिञ्जितैः ।
परिमलैश्च घनैर्वनदेवता-
  विहरणं मनुजैरनुमीयते ॥ १५ ॥

तरुलतानिकुरम्बकरम्बिते
  पतति यद्विपिने न रविद्युतिः ।
तदपि तत्र तमो न विजृम्भते
  फणिफणामणिदीधितिबाधितम् ॥ १६ ॥

मिहिरकान्तशिलासु निशि स्वप-
  ञ्झटिति यत्र मृगः प्रतिबुध्यते ।
दिनमुखे दिननाथकरोत्कर-
  स्फुरणवान्तकृशानुकृतोष्मसु ॥ १७ ॥

क्वचन घोरवराहगलोद्गलद्-
  घुरुघुरध्वनिभिर्जनितां श्रियम् ।
मुकुलशोभिकदम्बवनच्छलात्
  पुलकितात्मवपुर्वहतीव यः ॥ १८ ॥

सततपुष्प्यदशोकतरुव्रजै-
रुपरिपुञ्जितमञ्जुमधुव्रतैः ।
बहलधूमनिवर्तितदवानल-
प्रसरदीप्त इव क्वचिदस्ति यः ॥ १९ ॥

मुनिजनोटजवाटसमुत्थितैः
सुरभिगन्धिभिरध्वगहारिभिः ।
हवनधूमभरैर्गृहमेधिनां
पतिरिव क्वचन प्रतिभाति यः ॥ २० ॥

रविसुधाकरमण्डलकुण्डल-
स्तरलतारकहारगुणाञ्चितः ।
भवति यः समये क्वचिदुन्नतो
नृप इव स्फुरदुज्वलचामरः ॥ २१ ॥

विरचितस्तुतयो बहुभिर्द्विजै-
र्मुहुरसद्भिः रसद्भिरनोकहाः ।
कुसुमवृष्टिसृजो निजदैवतं
धृतकुलायकुला यमुपासते ॥ २२ ॥

अथ गुहामुखधीरगलद्ध्वनिं
स तमभङ्गुरशृङ्गसमुच्छ्रयम् ।
रघुपतिर्धरणीभृतमुच्चकै-
रधिरुरोह महोक्षमिवेश्वरः ॥ २३ ॥

अधिगिरं चिरमद्भुतदर्शनै-
र्बहुपदार्थचयैर्हृतमानसा ।
पदरुजं पथि कर्कशशर्करे-
ऽप्यतितरां न विवेद विदेहजा ॥ २४ ॥

सशरचापधरोऽथ सलक्ष्मणो
जनकजानुगतो रघुनन्दनः ।
परिगृहीतमनेकतपोधनै-
रभिससाद गिरीन्द्रशिरस्पदम् ॥ २५ ॥

क्वचन तत्र समृद्धसमित्कुशे
    सफलपुष्पतरौ सरितस्तटे ।
सरसपल्लवतल्पमकल्पय-
    न्नियमवासगृहं शुचि लक्ष्मणः ॥ २६ ॥

अरहितान्तिकमात्मविदां गणै-
    रधिवसन्नतिथीनभिपूजयन् ।
तदपुनादपुनर्विनिवर्तने
    महसि दत्तमना मनुवंशजः ॥ २७ ॥

उपचचार तमिष्टफलोदक-
    प्रसवदर्भकुशादिभिरादरात् ।
अवरजो जनकेन्द्रसुता पुन-
    श्चरणसंवहनव्यजनादिभिः ॥ २८ ॥

अथ तदा रघुराजपुरे नृपो
    दशरथः समशुष्यदहर्निशम् ।
सुतवियोगशुचा हृदयस्पृशा
    दवभुवा शिखयेव वनस्पतिः ॥ २९ ॥

विघटयंश्चतुरोऽपि सुतान् विधि-
    र्व्यधित यत् खलदारुणवैशसम् ।
तदथ तं नृपमाशु पुरातनं
    जरठतापसशापमसस्मरत् ॥ ३० ॥

अमृतशीतलशील ! कथं स्मृत-
    स्तपसि मामयि राम ! गुणाम्बुधे ! ।
हिमकरोऽप्यथवा कमलाकरं
    दहति पुण्यपरिक्षितिरीदृशी ॥ ३१ ॥

सुमुख ! लक्ष्मण ! पुत्रि ! विदेहजे !
    सुचरितं भवतोरतिजृम्भते ।
नहि गुरुर्गहनेऽपि यदुज्झितः
    सुहृदयं न जहाति य आपदि ॥ ३२ ॥

क्व बत हा मम सम्प्रति पुत्रका !
वितरत प्रतिवाचमधःसुधाम् ।
प्रदिशत क्षणमप्यवलोकनं
मुहुरिति व्यलपद् बलजित्सखः ॥ ३३ ॥

तदनु किं बहुना महितः सतां
सजरमाशु विहाय कलेवरम् ।
सुरवधूजननेत्ररसायनं
वपुरवाप्य दिवं समशिश्रियत् ॥ ३४ ॥

चिरनिरूढसुधर्मतया जवा-
दधिसुधर्ममराजत राजराट् ।
अथ वृषण्वसुभिर्वसुभिः स्वयं
मखभुजां पतिरेनमपूजयत् ॥ ३५ ॥

गरुडकेतुसमाहृतकौस्तुभः
कलशसिन्धुरिवापहतच्छविः ।
सकलशोच्यतमोऽजनि तं विना
जनपदो मनुवंशमहीभुजाम् ॥ ३६ ॥

अथ स मन्त्रिभिरागमितः क्षणा-
दवरजानुगतो भरतः पुरीम् ।
निशमयन् निजमातृविचेष्टितं
भृशमशोचत पुण्यहतिं निजाम् ॥ ३७ ॥

अथ पुरोहितकारितपैतृक-
श्रुतिविसृष्टविधिर्विधिवत् सुधीः ।
स दधदग्रजमेव निजाशये
समचलद् विपिनाय सहानुजः ॥ ३८ ॥

अवददेनमुपेत्य च मन्थरा
शृणु कुमार ! यदाह तव प्रसूः ।
बिभृहि राज्यमितः क्व गमिष्यसि
प्रगतराममिदं किमुपेक्षसे ॥ ३९ ॥

तव कृते विपिनं गमितो मया
जनकजावरजानुगतो हि सः ।
पितृविपत्तिरियं तु विधेर्बला-
न्नियतमृत्यु हि जन्म शरीरिणाम् ॥ ४० ॥

इति निशम्य रुषा भरतानुजः
करतलेन कचे परिकृष्य ताम् ।
सपदि हन्तुमना निशितासिना
गुरुजनानुनयात् पुनरत्यजत् ॥ ४१ ॥

प्रकृतिपौरपुरोहितमन्त्रिभिः
सह बलैश्च गजाश्वरथादिभिः ।
रघुपतेश्चरणावभिवन्दितुं
त्वरितधीर्भरतो वनमभ्यगात् ॥ ४२ ॥

गुहनिवासमवाप्य तदाहृतैः
प्रवहणैरतिलङ्घ्य च जाह्नवीम् ।
पथि विनम्य विनम्य मुनीश्वरा-
नुपससार स रामगिरेस्तटम् ॥ ४३ ॥

कलकलश्रवणद्रुतविद्रुत-
प्रबलसत्त्वससंभ्रमवीक्षिताः ।
चरणपातविघूर्णितभूमयो
विविशुराशु वनं नृपसैनिकाः ॥ ४४ ॥

खदिरसालरसालभृतं गिरेः
सकृतमालतमालवटं तटम् ।
करिवराहवराहवसाहस-
क्षुभितदारु तदारुरुहुश्च ते ॥ ४५ ॥

परिवृतः पृतनाभिरधित्यकां
सपदि तस्य भजन् भरतः पुरः ।
प्रशमशोभनसत्त्वमलोकत
प्रथमजस्य निजस्य तपोवनम् ॥ ४६ ॥

अथ स तत्र पिशङ्गजटाभरं
तरुणनीलपयोदनिभद्युतिम् ।
उपरिभासुरबालरविच्छविं
नवतमालमिवाग्रजमैक्षत ॥ ४७ ॥

तमुपसृत्य विदेहसुतान्वितं
विनयलक्षणलक्ष्मणसेवितम् ।
अयमसावभिवादयते विभो !
भरत इत्यभिधाय ननाम सः ॥ ४८ ॥

अथ तमेधि चिरायुरिति ब्रुवन्
करतले परिगृह्य सहानुजम् ।
रघुपतिः सुचिरं परिषस्वजे
मसितलेपशुभेन निजोरसा ॥ ४९ ॥

जनकजामभिवाद्य समुत्थितं
भरतमेनमवन्दत लक्ष्मणः ।
तमपि तत्सहजः परिरेभिरे
त्रय इमे कुतुकादितरेतरम् ॥ ५० ॥

समभिवन्द्य वसिष्ठमुखान् गुरू-
नधिगताशिषमेधिततेजसम् ।
भरततो विदिताथ पितुर्विप-
न्नृपसुतं विषगन्धिरमूमुहत् ॥ ५१ ॥

त्वरितमार्य ! समाश्वसिहीति च
प्रचलपल्लवमारुतवीजितः ।
स भरतेन समाहितचेतनो
धृतिमविन्दत धीरधियां वरः ॥ ५२ ॥

सहजदारसखः सरिदम्भसि
प्रविहिताभिषवो दिवमीयुषे ।
दशरथाय निवापजलाञ्जलिं
तिलविमिश्रमदात् स[1] समाधिमान् ॥ ५३ ॥

१. 'सु' क. पाठः.

निचितदर्भपुटे[1] विनिवेशितै-
रकृत पिण्डविधिं बदरीफलैः ।
य इह पिण्डकृतो हि यदन्धसो
जगति तत्पितरोऽपि तदन्धसः ॥ ५४ ॥

अथ पवित्रितवेत्रमयासनं
भरत एवमुवाच तमग्रजम् ।
परिगृहाण धुरं रघुभूभुजां
त्वरितमार्य ! निराश्रयताहताम् ॥ ५५ ॥

त्रिभुवनव्यवहारधुरन्धरे
भवति सत्यपि पूरुषकुञ्जरे ।
जलधिमध्यमितापि वसुन्धरा
विधुरतां भजतीति किमौचिती ॥ ५६ ॥

सकलहर्षपयोधिविजृम्भण-
क्षमगुणौघमयूखसमुज्ज्वलम् ।
क्वनु भवन्तमृते रमते धरा
कुमुदिनी क्व रता शशिनं विना ॥ ५७ ॥

इति निशम्य स सस्मितसूचिता-
नुचितमेव कुमार ! तवोदितम् ।
इदमभास्करवंशभुवां मतं
मम तु चेतसि नाभ्यवतिष्ठते ॥ ५८ ॥

कथमिदं तु मुनिव्रतमीरितं
गुरुजनेन चतुर्दश वत्सरान् ।
अनवसाय्य वहेम महीमिमां
रघुषु को धृतवानवकीर्णिताम् ॥ ५९ ॥

त्वमपि वत्स ! महीतलपालनं
प्रति पितुः प्रथमं खलु शासनम् ।
शिरसि माल्यमिवोचितधारणं
शुभमते ! न विहातुमिहार्हसि ॥ ६० ॥

---

१. 'शुचिनि द' क्व. ल. पाठः

किमिव दुष्करमस्ति तनूभृता
यदि भवेन्महतामनुशासनम् ।
फणिपतिर्न मृणालनिभैः फणैः
किमु बिभर्ति महीमजशासनात् ॥ ६१ ॥

पुनरपि प्रणमन् भरतोऽब्रवी-
न्मिहिरवंशमहामणिभूषणे ।
त्वयि गुरौ सति भूमिकरग्रहात्
कथमहं न भजे परिवेत्तृताम् ॥ ६२ ॥

नियतमार्य ! वने वसता त्वया
यदि धृतः समयो गमयिष्यते ।
तदिह लक्ष्मणतो विभजाम्यहं
भवदुपासनरूपमिदं व्रतम् ॥ ६३ ॥

भवतु काममनाथतया हतं
तव तु राज्यमिदं धरणीपते ! ।
व्रजतु मे जननी परमां मुदं
सकलमेतदहो यदुपक्रमम् ॥ ६४ ॥

रघुपतिस्तमुवाच तवाधुना
गुरुजनं प्रति शान्तमसूक्षणम् ।
किमिह नः कृतमप्रियमम्बया
रघुकुलोदयसादरयानया ॥ ६५ ॥

अकृतवंशविशुद्धिफलोत्तर-
स्थिरतपा अभविष्यमहं ततः ।
न समरोत्स्यत चेद् धरणीभरः
पिपतिपुर्मम मूर्ध्नि तदा तया ॥ ६६ ॥

मतिमतां वर ! गच्छ निजां पुरीं
गुरुगिरा परिपालय मेदिनीम् ।
अयमहं त्वसमापितशासनो
निजपितुर्न समाचरितास्मि ताम् ॥ ६७ ॥

स्वपुरगोपनमात्रनिरुद्यमै-
रपि चतुर्भिरनाश्रवताहतैः ।
निजसुतैः कथमस्तु महीपतिः
स खलु पुत्रितया दिवि कीर्तिमान् ॥ ६८ ॥

स्वयमधीत्यपि शास्त्रचये भवान्
किमिह मुह्यति नह्यति नो धृतिम् ।
अफलमाचरणे विमुखात्मना-
मपि हि सुस्थिरमध्ययनं विदुः ॥ ६९ ॥

इति वदत्युचितं भरताग्रजे
कृतधियां प्रथमो भरतोऽधिकम् ।
विरहितो मुमुदे विचिकित्सया
बहुलपक्षनिशेव निशाकरः ॥ ७० ॥

अथ कृताञ्जलिरग्रजमूचिवा-
ननुवहाम्यहमार्य ! महाभरम् ।
परममूनि चतुर्दश हायना-
न्यपरतस्तु भवान् प्रतिवक्ष्यति ॥ ७१ ॥

पद्परागपवित्रितमस्तके
वितर मह्यमुभे तव पादुके ।
अहमिमे उपवेश्य नृपासने
कृतनतिर्धरणीमवितास्मि यत् ॥ ७२ ॥

अथ तथेति ददौ निजपादुके
रघुपतिर्भरताय धृतादरः ।
स्वगुरुनामपदाक्षरयोर्द्वयी
ध्रुवमिमे इति सोऽपि गृहीतवान् ॥ ७३ ॥

प्रदक्षिणीकृत्य मुहुर्मुहुर्नम-
न्नमन्दभक्तिः स सदारमग्रजम् ।
सबाष्पकण्ठं परिरभ्य लक्ष्मणं
ततो ययौ मूर्ध्नि निविष्टपादुकः ॥ ७४ ॥

वसिष्ठाद्यैः सार्धं गुरुभिरुरुभिः स्वैरपि बलै-
विलङ्घ्याद्रिप्रस्थं हरमकुटमालां च सरितम् ।
शुभे नन्दिग्रामे वसतिमकरोद् वल्कलधरो
जटावानुन्निद्रो भुवनपरिरक्षासु भरतः ॥ ७५ ॥

अनुदिनमनुचिन्तन् भ्रातरं रामभद्रं
मुनिचरितमपुष्णन्नर्चयन् पादुके ते ।
चतुरुदधिदुकूलां व्यानशे भूतधात्रीं
रविरिव भुवनेड्यस्तेजसा राजसूनुः ॥ ७६ ॥

इति श्रीमद्रामपाणिवादविरचिते राघवीये महाकाव्ये
षष्ठः सर्गः ।

---

## अथ सप्तमः सर्गः ।

अथ रामः सपत्नीकश्चित्रकूटतपोवने ।
तपस्याभिः समग्रोऽभूत् कलाभिरिव चन्द्रमाः ॥ १ ॥
तरुणाम्बुधरश्यामं जटाचीवरधारिणम् ।
आरक्तविपुलापाङ्गं शरच्चन्द्रनिभाननम् ॥ २ ॥
दीर्घबाहुं वृषस्कन्धं कवाटविपुलोरसम् ।
तरुत्वगुत्तरासङ्गं निषङ्गशरभासुरम् ॥ ३ ॥
रुद्राक्षवलयं पाणौ बिभ्राणमनघं धनुः ।
क्षात्रमार्षं च यत् तेजस्तस्य निर्बाधमाश्रयम् ॥ ४ ॥
समानव्रतवेषेण लक्ष्मणेनोपसेवितम् ।
सीतया शोभितोपान्तं विद्ययेवात्मवित्तमम् ॥ ५ ॥
तमुपासत तत्रत्या मुनयो विनयोज्ज्वलम् ।
तपसामात्मतप्तानां फलोदयमिवाङ्गिनम् ॥ ६ ॥
अथ शाखासहस्रेण निरुद्धरविदीधितेः ।
मूले वनस्पतेः शिश्ये सीताङ्के जातु राघवः ॥ ७ ॥

ततो वायसरूपेण जयन्तः प्राप्य कौतुकात् ।
विददार नखैः किञ्चिज्जानक्याः स्तनमण्डलम् ॥ ८ ॥

निद्रादरालसो रामस्तयाथ प्रतिबोधितः ।
इर्षीकास्त्रेण दुर्दान्तमक्ष्णा काणीचकार तम् ॥ ९ ॥

पुराभ्यर्णस्थितानस्मान् भरतः पुनरेष्यति ।
इत्थमाशङ्क्य सोऽत्याक्षीच्चित्रकूटसुखासिकाम् ॥ १० ॥

ततः सदारसोदर्यः प्रतस्थे दक्षिणां दिशम् ।
आश्रमेषु मुनीन्द्राणामतिथीभूय भूयसाम् ॥ ११ ॥

वटुवर्गमुखोदीर्णवेदवर्णपवित्रितम् ।
अत्रेस्तपोवनं भेजे धूमश्यामलिताम्बरम् ॥ १२ ॥

अथात्मना तृतीयस्तं प्रणनाम रघूत्तमः ।
स चैनं पूजयामास दक्षिणाग्निमिवोज्ज्वलम् ॥ १३ ॥

अमृतं जननेत्राणां चूडारत्नं पिनाकिनः ।
चकोरजीवनं ज्योतिर्यस्य नेत्रादजायत ॥ १४ ॥

ननन्दुरधिकं तस्य सन्निधौ राघवादयः ।
सर्वतोमुखमानन्दं दत्ते साधुसमाश्रयः ॥ १५ ॥

अनसूयां तु तत्पत्नीमुपास्त जनकात्मजा ।
विष्णुभक्तिरिवाव्यग्रा मुक्तिमेकान्तनिर्वृतिम् ॥ १६ ॥

सा तु तस्य ददौ दिव्यमङ्गरागं तपोधना ।
पातिव्रत्याविनाभावसौभाग्यपरमौषधम् ॥ १७ ॥

अहानि कानिचित् तत्र यापयित्वा यथासुखम् ।
मुनेराशिषमादाय प्रतस्थे राघवो वशी ॥ १८ ॥

अथ स्तम्भैरिवोत्तुङ्गैरम्बरस्यातिभूयसः ।
तत्पातशङ्किना धात्रा सृष्टैस्तरुभिरावृतम् ॥ १९ ॥

पञ्चास्यनखराविद्धहस्तिमस्तकनिःसृतैः ।
पक्वदाडिमबीजाभैः सरक्तैर्मौक्तिकैश्चितम् ॥ २० ॥

तरक्षुवदनाकृष्टमृगशोणितबिन्दुभिः ।
सिन्दूरितोच्चपाषाणकूटकूटद्विपाननम् ॥ २१ ॥

सुप्तवाहसनिःश्वासैरुद्गीर्णविषवह्निभिः ।
गुहासु तिमिरोद्द्योतपर्यायोन्मेषभीषणम् ॥ २२ ॥

मुखोदरबहिष्पातिदीर्घजिह्वैरितस्ततः ।
उत्क्रान्तजीवितैर्व्याप्तं हरिणैर्व्याधपातितैः ॥ २३ ॥

वराहघोणपर्यस्तमुस्तासुरभिमारुतम् ।
लुलायखुरविक्षुण्णवल्मीकोद्गतपन्नगम् ॥ २४ ॥

कण्डूलचण्डवेतण्डगण्डकण्डूतिखण्डितैः ।
अकाण्डपतितैर्वृक्षैरुद्यच्चटचटायितम् ॥ २५ ॥

भयस्येवोचितं स्थानं मृत्योरिव निकेतनम् ।
उपविन्ध्याचलं रामो दण्डकं वनमाविशत् ॥ २६ ॥

तत्र दन्तुरपाषाणदुर्गमं मार्गमार्ययोः ।
पुरस्तादेत्य सौमित्रिस्तस्तार तरुपल्लवैः ॥ २७ ॥

पिपासामास वैदेही क्लान्ता यत्र कदध्वनि ।
तत्र पत्रपुटीकुम्भसम्भृताम्भा व्यलोकि सः ॥ २८ ॥

तरुमूलनिवासेषु देवरेणोपहारितैः ।
जलार्द्रैः पल्लवैः सीता रामभद्रमवीजयत् ॥ २९ ॥

स्वादूनि फलमूलानि पत्ये दत्त्वा पतिव्रता ।
यानि कानि तदुच्छिष्टान्यमृतादमथाद सा ॥ ३० ॥

स्वाङ्कसुप्तस्य सा पत्युरध्वखिन्नापि जाग्रती ।
ललाटे पाणिमादाय निनाय निखिला निशाः ॥ ३१ ॥

ते तु मूलेषु मूलेषु विश्रान्ता वनशाखिनाम् ।
नैकेन वासरेणापि क्रोशमेकमलङ्घयन् ॥ ३२ ॥

वैखानसीभिरभ्याशमागताभिः कुतूहलात् ।
पृष्टप्रशंसितोदन्ता सीता सास्रमगद्यत ॥ ३३ ॥

पुत्रि ! वैदेहि ! दुर्वारो धीमतापि विधिर्बली ।
यदेष रामभद्रोऽपि विन्ध्याद्रिपथिकोऽभवत् ॥ ३४ ॥

ईदृशेऽपि वने घोरे भर्तारमनुगत्वरी ।
उदाहरणमेवाद्यं सतीनामसि जानकी ॥ ३५ ॥

क्वापथेऽप्यत्र कल्याणि ! कान्तस्यानुपदं व्रज ।
किं न पश्यसि हिंस्राणामास्पदं विन्ध्यमेखलाः ॥ ३६ ॥
अयमायाति मातङ्गो जङ्गमाचलसन्निभः ।
दन्तकुन्तमुखप्रोतानाकर्षन् पादपान् बहून् ॥ ३७ ॥
अथवा नैष मातङ्गो हाहा किं कुर्महे वयम् ।
अयमभ्येति दुष्टात्मा विराधो नाम राक्षसः ॥ ३८ ॥
शूलाग्रप्रोतमातङ्गकण्ठीरवरवोद्भटः ।
भक्षयिष्यति नः सर्वान् दुर्वारोऽयं निशाचरः ॥ ३९ ॥
अपि शक्रादयो देवा बिभ्यत्यस्माददहर्दिवम् ।
विपदां भृशमाधातुः संसारादिव योगिनः ॥ ४० ॥
इति तासु ब्रुवाणासु गर्जत्पर्जन्यसन्निभः ।
प्रहसन् प्रकटध्वानमध्वानमरुधत् खलः ॥ ४१ ॥
रामलक्ष्मणयोर्मध्यादाजहार स जानकीम् ।
आकस्मिकोदयः क्रोधः सिद्धिं धर्मार्थयोरिव ॥ ४२ ॥
प्रवेपमाना तस्याङ्के राहोरिव विधोः कला ।
दाशरथ्योः क्षणं सीता मोहान्धत्वमजीजनत् ॥ ४३ ॥
अथ रोषारुणाक्षाभ्यां ताभ्यां साक्षेपमीक्षितः ।
मुमोच यातुधानस्तां विनेत्री भीरपि क्वचित् ॥ ४४ ॥
ततः स तावभीयाय सावहित्थो भियं प्रति ।
कृतान्तचोदितः को वा विपदो विनिवर्तते ॥ ४५ ॥
रामलक्ष्मणयोर्बाणौ युगपद् विनिपेततुः ।
तस्मिन्नभ्रङ्कषोच्छ्राये वह्निवाताविवाचले ॥ ४६ ॥
अथ राक्षसमुज्झित्वा स वपुश्चिरधारितम् ।
दिव्यभूयं प्रपन्नः सन्नुपवीणयति स्म तौ ॥ ४७ ॥
जयतं जगतां नाथौ सप्रयोजनविग्रहौ ।
विश्वरक्षापरौ वीरौ युवां जानामि राघवौ ॥ ४८ ॥
अहं तु तुम्बुरुर्नाम गन्धर्वो गर्वहेतुकात् ।
लङ्काधिपतेः शापान्नाप्तं यातुधानताम् ॥ ४९ ॥

रामबाणः समुद्धर्त्ता भवन्तं शापकूपतः ।
इति सोऽन्वग्रहीद् भूयः स्तुवन्तं मां प्रसेदिवान् ॥ ५० ॥
हिंस्रजातितमिस्राया: सुप्रातस्तत्र सायकः ।
प्रकाशमकृतास्माकं जगतामिव भानुमान् ॥ ५१ ॥
तदहं चिरसन्त्यक्तं प्रयास्यामि निजं पदम् ।
त्वं पुनः शरभङ्गस्य मुनेराश्रममाश्रय ॥ ५२ ॥
स्वर्लोकं नेतुमिन्द्रेण शतकृत्वः स याचितः ।
त्वद्दर्शनाभिलाषी तं नाद्याप्यभ्यवपद्यते ॥ ५३ ॥
कथमभ्यवपद्येत यद्वा विद्वान् महामुनिः ।
ब्रह्मादीनां शरीराणि कार्यत्वान्नश्वराणि यत् ॥ ५४ ॥
स्वप्रकाशचिदानन्दे त्वयि राम! सनातने ।
युयुक्षोः शरभङ्गस्य कः शक्रः कः प्रजापतिः ॥ ५५ ॥
इत्युदीर्य स गन्धर्वः कुर्वन्नङ्गमरीचिभिः ।
अकाण्डविद्युदुन्मेषमभ्रमार्गे तिरोभवत् ॥ ५६ ॥
रामादयस्ततो भेजुः शरभङ्गतपोवनम् ।
पुराणपादपच्छायाशयानमृगवर्धकम्[1] ॥ ५७ ॥
उपर्युपरि तं देशं विमानवरवासिनम् ।
साक्षादीक्षाम्बभूवुस्ते नेतारममृतान्धसाम् ॥ ५८ ॥
तत्क्षणं च तिरोभूते तस्मिन् विस्मितमानसाः ।
कथितान्वयनामानो मुनिमेत्य ववन्दिरे ॥ ५९ ॥
समाधिं शिथिलीकृत्य स समुन्मीलितेक्षणः ।
ततस्ताननुजग्राह श्रेयो वस्तायतामिति ॥ ६० ॥
उवाच च जगत्त्राणप्रवीणभुजतेजसः ।
तवावलोकनाद् राम ! पूर्णा मम मनोरथाः ॥ ६१ ॥
स्वपुण्यविजिताल्लोँकान् नेतुमस्मान् पुरन्दरः ।
इह प्राप्य बहून् कालानस्मदिच्छां प्रतीक्षते ॥ ६२ ॥

---

१. 'वृद्धकम् ।' क. पाठः.

येन प्रसितधीरेव नात्यजं जीर्णविग्रहम्।
त्वन्मुखालोकनं तद्धि सिद्धं सिद्धान्तितं मया॥ ६३॥

तत्प्रयाम्यात्मनः सिद्धिं वत्सा! भद्राणि सन्तु वः।
इति सोऽग्निं समाधाय हविस्तत्राकरोद् वपुः॥ ६४॥

सानुगस्तु ततो रामः सुतीक्ष्णाश्रममासदत्।
तेनापि सत्कृतः कांश्चिदासामास च वासरान्॥ ६५॥

विन्ध्याद्रिर्येन तस्तम्भे पपे येन महार्णवः।
अतापि येन वातापिर्मुनीन्द्रं तं ततोऽभ्यगात्॥ ६६॥

गृह्णन्तमात्मनः पादौ सानुजं जानकीपतिम्।
आशीर्भिरेधयाञ्चक्रे स मुनिः कुम्भसम्भवः॥ ६७॥

लोपामुद्रामनुप्राप्य प्रणनाम विदेहजा।
तयोस्तु सङ्गमस्तत्र श्रद्धासिद्ध्योरिवाबभौ॥ ६८॥

स धनुर्बाणतूणीरखड्गामारिजयोन्मुखीम्।
मुनेरनुज्ञामादाय प्रतस्थे राघवस्ततः॥ ६९॥

अधिवर्त्ममवैक्षिष्ट पक्षिराजं जटायुषम्।
पितुः पुराणमित्रं तं नत्वा च परिषस्वजे॥ ७०॥

इतः पञ्चवटीं नाम पुण्यभूमिमुपागताः।
सञ्चिनुध्वं तपो वत्सा! इत्यादिश्यन्त तेन ते॥ ७१॥

अथ विप्रकृतास्तीक्ष्णैर्यातुधानैस्तपोधनाः।
छायाद्रुमिव घर्मार्ता राघवं शरणं ययुः॥ ७२॥

स तु कारुणिकस्तेषां पुरस्तादात्तकार्मुकः।
प्रतिजज्ञे महावीरो निधनं सर्वरक्षसाम्॥ ७३॥

प्रविकासभासुरतरुप्रसव-
प्रसरत्परागपरिकीर्णभुवम्।
निकटप्ररूढकुशदर्भशुभा-
मभजन्नमी सपदि पञ्चवटीम्॥ ७४॥

सम्भोगनिःसहपुलिन्दवधूकपोल-
स्वेदाम्बुबिन्दुमणिजालमलिम्लुचेन ।
गोदावरीशिशिरवारिचरेण तेषां
मार्गश्रमः शममनायि समीरणेन ॥ ७५ ॥

तटे गोदावर्यास्तरुणतरुषण्डैरपिहिते
तरङ्गन्यासङ्गप्रकृतिशिशिरस्वच्छसिकते ।
समासीनः श्रीमाननुजकृतपर्णोद्वसिते
तपश्चर्यां वर्यां चिरमकृत सीतासहचरः ॥ ७६ ॥

इति श्रीमद्रामपाणिवादविरचिते राघवीये महाकाव्ये
सप्तमः सर्गः ।

---

## अथ अष्टमः सर्गः ।

अथ तं विशालविशदात्मगुणै-
रमृतैरिवाञ्जनमशेषदृशाम् ।
शशिनं कुहूरिव तमोऽन्धतमा
पतिमाप्तुमारभत शूर्पणखा ॥ १ ॥
पृथुलस्तनं घननितम्बभरं
सविलासहासरमणीयमुखम् ।
कुटिलालकं च कुहनाकुशला
बिभराम्बभूव निजमाशु वपुः ॥ २ ॥
अतिभूमधूमचयधूम्ररुचेः
सहसाकृतेर्विगलिता ललिता ।
अचिरप्रभेव नवमेघततेः
सुतरामराजत तदीयतनुः ॥ ३ ॥
कलहंसतो गतिविलासमसौ
चटुलेक्षितानि हरिणीनिकरात् ।
कलभाषितं च कलकण्ठमुखात्
प्रतिभाबलेन शिक्षितवती ॥ ४ ॥

अलिपालिनादसरसोक्तिषु सा
मुकुलस्तनीषु लतिकासु निजम् ।
निजुगूह देहमथ कृत्रिमया
त्रपया सखीष्विव सखेलगतिः ॥ ५ ॥

मणिनूपुरक्वणनतोऽनुमिल-
त्कलहंसिकानिकरमध्यगता ।
बहुवर्णभूषणतयान्वकरो-
च्छरदम्बुदोत्थहरिचापरुचम् ॥ ६ ॥

अभिरामसात्त्विकविकाररसा-
वभिराममाक्षिपदथाक्षियुगम् ।
भयवेपथुश्लथनिचोलपट-
स्फुटदर्शितस्तनमनोज्ञतनुः ॥ ७ ॥

उपसृत्य सा विनयनम्रमुखी
धुतकेशपाशगलितैः कुसुमैः ।
रचितार्चनाविधिरिवेन्दुमुखी
प्रणनाम तं प्रणयरागवती ॥ ८ ॥

मृदुहासभासुरमुखाम्बुरुहा-
मनरालनालनिभबाहुलताम् ।
सरसीमिवोन्नतपयोधरतां
दधतीमलोकत विभुः सुदतीम् ॥ ९ ॥

गुरुविस्मयस्तिमितदृग्भ्रमरे
वदनाम्बुजे निमिपतेर्दुहितुः ।
वलमानदृष्टिरथ दाशरथिः
स्मितभूषणां गिरमभाषत ताम् ॥ १० ॥

तरुणि ! स्फुरत्तरुणिमोपधिक-
प्रविकासभासिकुसुमस्य तव ।
अतिवल्गुसद्गुणजुषो वपुषः
कुशलं किमङ्गजनुषो धनुषः ॥ ११ ॥

भवदात्मना परिणतस्य पुन-
र्नवमौक्तिकस्य भुवनात्रितये ।
अवगम्यतां खनिरनेन मया
वद वासु! भासुरतमा कतमा ॥ १२ ॥

युवलोकलोचनचकोरकुलै
रसुपानताविफलकान्तिसुधा ।
वननिह्नुता चरसि भीरु! कुतो
घननिह्नुतेव तुहिनांशुकला ॥ १३ ॥

हरिणारिपाणिरुहनिष्कुषित-
द्विपकुम्भकूटकुतुपक्षरितैः ।
रुधिराम्बुभिः सुमुखि! कर्दमिताद्
गहनादितोऽपि न बिभेषि कथम् ॥ १४ ॥

अहमस्मि राम इति दाशरथि-
र्जनकात्मजेयमपि मे गृहिणी ।
किमितोऽभिवाञ्छसि विलासिनि! य-
न्न तपोविरोधि यदि तत् क्रियते ॥ १५ ॥

इति तस्य युक्तरचनैर्वचनै-
रतिदीप्यमानमदनव्यथया ।
स्फुटसाध्वसोद्गमितगद्गदिकां
गिरमभ्यभाषि स तया शनकैः ॥ १६ ॥

वपुषः श्रिया विजितपुष्पशर!
प्रणमामि राम! तव पादयुगम् ।
शिरसा विवक्षति यतो गलितं
सुभगं रजःपटलमेष जनः ॥ १७ ॥

सुषमामृतं यदि तवाङ्गभवं
स्वदृशा रतिः स्वयमपास्यदिदम् ।
अरतिं स्मरे ध्रुवमवाप्स्यदसौ
गुणसम्पदां जगति तृप्यति का ॥ १८ ॥

भुवनेषु नान्यमनुषज्जति मे
भुवनैकसुन्दर ! भवन्तमृते ।
हृदयं गुणप्रवणमृच्छति वा
शशिनं विना क्वनु मुदं कुमुदम् ॥ १९ ॥

अनुरागिणीमनुगृहाणतमा-
मबलामिमामसमबाणहताम् ।
अनुरूपरूपरतिशीलशुभां
लभते स्त्रियं सुभग एव पुमान् ॥ २० ॥

चिरमर्थितापि चटुकाकुशतै-
रुपलालितापि विभवानुगुणम् ।
अनुकूलभावसरसा तरुणी
धरणीपते ! न बहुभिः सुलभा ॥ २१ ॥

अथ तामुवाच रघुराजसुतः
सुतनु ! त्वयोचितमिदं गदितम् ।
सुखवञ्चितः स खलु यस्त्यजति
स्वयमागतां श्रियमिव प्रमदाम् ॥ २२ ॥

पितुराज्ञया पथि मुनिप्रहते
पथिकव्रतं यदधुना बिभृमः ।
निरुणद्धि तत् तव परिग्रहणं
परतन्त्रता हि सुखरोधकरी ॥ २३ ॥

सहधर्मचारिणितमा खलु मे
जनकात्मजेयमभिमानवती ।
न सुखाकरिष्यति शुभे ! भवती-
मसहं सपत्न्यपकृतेः किमु वः ॥ २४ ॥

इह तारकाकुमुदिनीरजनीः
परिगृह्णतो हिमरुचेरिव मे ।

सकलङ्कता सुमुखि ! मा स्म भवद्-
बहुवल्लभत्वपरिवादभवा ॥ २५ ॥

इह तावदस्ति मम सन्निहितः
सहजः स लक्ष्मण इति प्रथितः ।
वरय त्वमेनमुपसृत्य जवाद्
वपुषः श्रिया यदनुजो मदनः ॥ २६ ॥

धृतपल्लवोऽस्य सुकुमारतया
शशिरोचिषा कुसुमितो यशसा ।
तरुणीघनस्तनफलानुदया-
दफलेग्रहिस्तरुणिमद्युतरुः ॥ २७ ॥

स्मरकर्मघर्मबलमुर्मुरित-
स्वतनुः स चातक इवाभिनवाम् ।
अपमेघवृष्टिमिव हृष्टमनाः
सपदि ग्रहीष्यति युवा भवतीम् ॥ २८ ॥

कुहनाविशङ्किमनसाभिहितं
रघुनन्दनेन परिगृह्य वचः ।
प्रचचाल सा दशमुखावरजा
क्व विवेकिता क्व मदनातुरता ॥ २९ ॥

गतया तया पथि कियन्ति पदा-
न्यवलोकितो धृतधनुः स पुमान् ।
तनुकम्पनत्रुटितबन्धपत-
चिकुरान्धकारितवनान्तभुवा ॥ ३० ॥

धृतिभारवारितदीक्षणज-
क्षणजीवविस्मयविकारमतिः ।
भरतानुजो निववृते स यदा
जगदे तदा द्रुतमुपेत्य तया ॥ ३१ ॥

अवधी रणाङ्कणपराक्रमिणा-
मवधीरणं किमु करोति भवान् ।
रमणीयमङ्गमवलोकयितुं
रमणीयमङ्ग ! तव नार्हति किम् ॥ ३२ ॥

वरयामि सुन्दर ! भवन्तमहं
परया गुरोस्तव निदेशगिरा ।
परितो वनं ननु तवानुगता
परितोषयामि सदयं हृदयम् ॥ ३३ ॥

फलमूलभोजनपराङ्मुख-
व्रतवह्निशोषितवपुः क्व तपः ।
नवयौवनोद्धतनितम्बवती-
परिरम्भणं क्व च विचार्यमिदम् ॥ ३४ ॥

वरवर्णिनीजनमनःकुमुद-
प्रमदोपपादननिरादरया ।
वपुषः श्रिया तव किमस्ति फलं
वद सान्द्रयेव वनचन्द्रिकया ॥ ३५ ॥

अनुरूपया नृपकुमार ! मया
रमया मुकुन्द इव नन्द चिरम् ।
वरिवस्यया तव मनोरमया
रमयामि मानसममानमनाः ॥ ३६ ॥

अपमक्षिकं मधुरमेकरसं
करसंस्थितं मधु विधूय भवान् ।
भविता ममैव गिरि सानुशयः
कियता दिनेन गिरिसानुशयः ॥ ३७ ॥

नवकामिनीनयनयोरमृतं
कतिचिद् दिनानि मनुजस्य वयः ।
शिथिले तु तत्र कतमः सुभगो
गलिते जले सरिति सेतुरिव ॥ ३८ ॥

इति तत्प्रगल्भवचनानि ततः
श्रुतिदुःसहानि स निशम्य वशी ।
कुहनामवेत्य च कुशाग्रमतिः
कुशलोक्तिपूर्वकमवोचत ताम् ॥ ३९ ॥

तनुरामणीयकसनाभिरहो
हृदयङ्गमा कमनि! वागपि ते ।
अथवा किमद्भुतमिदं यदसा-
वमृतद्युतेरमृतवृष्टिरिति ॥ ४० ॥

क वयं तपःकठिनकायभृतः
सुतरां मृदुः सुतनु! ते क तनुः ।
नवमल्लिकासुमनसः स्युरहो
कथमश्मपुत्रकशिरांसि पदम् ॥ ४१ ॥

सुहृदो ममात्र रुरवस्तरवो
भवनानि किञ्च शयनानिशिलाः ।
कतमत् तवैषु रतये कथये
रतिसम्भवो हि मदनः सुदति! ॥ ४२ ॥

अपिच क्षणार्धमपि न स्ववशो
विचरामि यत् परिचरामि गुरून् ।
परिचारकस्य मम वल्लभया
भविता त्वयापि परिचारिकया ॥ ४३ ॥

करुणावलोकलवलिप्सुतया
प्रणतं प्रियं प्रणयकोपव्रती ।
चरणेन ताडयितुमर्हसि या
कथमत्र सा भवसि दासिहता ॥ ४४ ॥

तदितो मदग्रजमुदग्रगुणं
पुनरप्युपेत्य परिसान्त्वय तम् ।
मदपेक्षया खलु मृगाक्षि! तदा
यदुदास्थितं त्वयि किमप्यमुना ॥ ४५ ॥

वनवर्त्मना हरितरक्षुवृक-
द्विपसञ्चरेण यदि सञ्चरसे ।
तत ईदृशीमधिगतो भवती-
मधिकं प्रमोदमुपयास्यति सः ॥ ४६ ॥

भवतीमवाप्य बहुखेदसहां
गगनाटनव्यसनिना गुरुणा ।
मणिकुट्टिमप्रसरणेऽप्यसहा
परिहास्यते खलु विदेहसुता ॥ ४७ ॥

इति स प्रतारणपरैर्वचनै-
रथ तां निरास्थत निरास्थतया ।
तदुदीरितानि परिगृह्य च सा
भरताग्रजं पुनरपि प्रययौ ॥ ४८ ॥

अबुधस्यदित्थमविषह्यतर-
स्मरदुर्दशा दशरथस्य सुतौ ।
करभीव सा करिकुलप्रवरौ
क्वनु तारतम्यमवयन्ति जडाः ॥ ४९ ॥

अधिमध्यदेशमुभयोरनयो-
र्गतमागतं च बहुधा दधती ।
स्फुटरोषपांसुकलुषाजनि सा
तटयोरिवोर्मिलहरी सरितः ॥ ५० ॥

अथ सा रसातलनिभास्यदरी-
परिघूर्णमानरसनाभुजगम् ।
नरमांसमांसलभुजांसगल-
त्प्रविलम्बितास्रकणपिच्छिलितम् ॥ ५१ ॥

ज्वलदारकूटकपिशाक्षिकचं
कुचकूटपाटिततरुप्रकरम् ।
गिरिशृङ्गतुङ्गमसिताभ्रनिभं
प्रथयांबभूव च वपुः सहजम् ॥ ५२ ॥

झटिति ग्रहीतुमवनेस्तनया-
मभिपेदुषी परुषकण्ठरवा ।
रुरुधे करालकरवालभृता
सहसैव रामसहजेन रुषा ॥ ५३ ॥

अवहेलनोपचितरोषभर-
स्मरविक्रियाकुलमतेः स बलात् ।
खरदूषणस्वसुरनार्यरुचेः
श्रुतिनासिकोष्ठमलुनादसिना ॥ ५४ ॥

प्रकृतिर्यथा विकृतिमेति तथा
विकृतिः क्वचित् प्रकृतिमाश्रयते ।
इति दर्शयन्निव स विश्रवस-
स्तनयां तदा व्यधित विश्रवसम् ॥ ५५ ॥

रुदती ततो रुधिरपूरपरि-
प्लवमाननेत्रसलिलार्द्रतनुः ।
अभिधावति स्म खरदूषणयो-
रुपकण्ठभूमिमनु शूर्पणखा ॥ ५६ ॥

क्षतजारुणीकृतशरीरतया
परिभूतपुष्पितपलाशलताम् ।
अभिसृत्वरीमिदमभाषत तां
परुषाट्टहाससमुखरः स खरः ॥ ५७ ॥

अविवेचकेषु कतमेन कृता
विकृताननासि वद शूर्पणखे! ।
कतमो विविक्षति विजृम्भिकया
विवृतं क्षणादिव कृतान्तमुखम् ॥ ५८ ॥

अथ सा जगाद रघुराजसुता-
वधितिष्ठतो भुवमिमामुभकौ ।
अनयोस्तु राम इति लक्ष्मण इ-
त्यभिधा किल प्रथमजानुजयोः ॥ ५९ ॥

स तु लक्ष्मणस्तत्र यशःसदृशं
मम चाच्छिदच्छ्रुतिमतुच्छबलः ।
खरदूषणत्रिशिरसो! भवता-
मवनेर्भराय भुजयोर्गरिमा ॥ ६० ॥

तरसा खरस्य हृदयं विशतो
विधुतस्य कोपदहनस्य ततः ।
निटिलोत्थितभ्रुकुटिधूमलता-
मनुमानलाञ्छनमधत्त मुखम् ॥ ६१ ॥

मनुजद्वयक्षतजशीधुपिबा-
मचिराद् विधत्त युधि शूर्पणखाम् ।
इति तावदक्षिपदतिक्षुभितः
स जवाच्चतुर्दश निशाटभटान् ॥ ६२ ॥

धृतकङ्कटैरसिशरासगदा-
शरशक्तितोमरकरालकरैः ।
अथ तैरुपेत्य मनुवंशमणेः
शलभायितं विशिखवह्निमुखे ॥ ६३ ॥

सहदूषणस्तदनु सत्रिशिराः
समराय कार्मुकधरः स खरः ।
अचलच्चतुर्दशसहस्रनिशा-
चरवीरहीरपरिवारवृतः ॥ ६४ ॥

खुरकूटपाटितपुरस्तरुभि-
स्तुरगैरुदूढमधिरुह्य रथम् ।
धनुरारवाकुलितशैलगुहः
सपदि न्यविक्षत स पञ्चवटीम् ॥ ६५ ॥

अथ तामलोकत विलोलपट-
ध्वजदण्डदन्तुरितमेघपथाम् ।
रथचक्रविक्रमविदीर्णभुवं
रघुसूनुराशरवरध्वजिनीम् ॥ ६६ ॥

तदनु ज्वलन्निव रुषा स धनु-
 र्बिभराम्बभूव विभुरुग्ररवम् ।
रजनीचरान्धतमसग्रसन-
 प्रसभोत्थभास्करकरांश्च शरान् ॥ ६७॥

सहजे निधाय स विदेहसुता-
 मभियुक्तवानहितवीरभटैः ।
हिमदीधितौ हिममयीं स्वरुचिं
 तिमिरोत्करैरिव निदाघरुचिः ॥ ६८ ॥

युधि राघवस्य विशिखैः परितः
 प्रविसारिभिः स्फुरितवह्निशिखैः ।
अविपह्यशक्तिभिरदह्यत सा
 द्रवदाहमाशरवरूथवती ॥ ६९ ॥

सहदूषणे त्रिशिरसि क्षपिते
 कुपितेन तेन मनुजाधिभुवा ।
रभसादयुध्यदपविद्धगदः
 शरदण्डमण्डलकिरः स खरः ॥ ७० ॥

अभवत् तयोरविरतप्रसर-
 स्फुरदस्त्रपूरितहरिद्विवरः ।
चरणाभिघातचलिताद्रिवरः
 शरपातविभ्यदमरः समरः ॥ ७१ ॥

खरबाणखण्डितधनुः स घनं
 घनमण्डलीवसति माधवतम् ।
कलशोद्भवेन मुनिना प्रहितं
 महितं शरासनमथाददिवान् ॥ ७२ ॥

नमयाश्चकार परमार्थवेदिनः
 शिरसा खरस्य सममैन्द्रकार्मुकम् ।
मनुवंशकेतुरनुपाधिकोज्ज्वल-
 प्रथमानदिव्यरुचिभव्यदर्शनः ॥ ७३ ॥

अथ रघुवरबाणच्छिन्नकण्ठप्रणाली-
गलितरुधिरवारिक्षालिताघव्यलीकः ।
अनिमिषपुरयोषिदुद्दत्तहस्तावलम्बो
दिव उपरि विरेजे रक्षसां वाहिनीशः ॥ ७४ ॥

इति किल जनस्थानं रामः क्षणादकुतोभयं
विदधदमरद्वेषिव्रातच्छिदाव्रतदीक्षितः ।
मुनिपरिषदा प्रीत्युत्फुल्लैरपीयत लोचनैः
कमलसरिता कञ्जैरम्भोरुहैरिव भानुमान् ॥ ७५ ॥

इति श्रीमद्रामपाणिवादविरचिते राघवीये महाकाव्ये
अष्टमः सर्गः ॥

---

## अथ नवमः सर्गः ।

ततो दवाग्निक्षपितादरण्याद् व्याघ्रीव निर्गत्य महामहीध्रम् ।
विनश्यतः शूर्पणखा स्वयूथाल्लङ्काधिनाथं शरणं प्रपेदे ॥ १ ॥

रक्षःसभे नैकरुचां मणीनां प्रभाभिरुद्द्योतितशक्रचापम् ।
सिंहासनं सिंहमिवाद्रिशृङ्गमाधिष्ठितं प्रैक्षत राक्षसेन्द्रम् ॥ २ ॥

ततः प्रहस्तप्रमुखैरमात्यैरुपासितोऽन्यैरपि सैन्यपालैः ।
कवीश्वराणां कविचोदितानां वृन्दैरुपश्लोकितदोःप्रतापः ॥ ३ ॥

चरास्यसञ्चारितचाटुवाचामाचारपत्राणि हरित्पतीनाम् ।
प्रवाचितान्यप्यवगत्य मानी मनागनाकर्णितकेन तिष्ठन् ॥ ४ ॥

दूरानतस्कन्धधृतोपदार्थपदार्थसार्थानपि देवदूतान् ।
द्वारे निरुध्यावसरप्रतीक्षैर्दौवारिकैरार्थितदृष्टिपातः ॥ ५ ॥

कराञ्चलप्रेङ्खितचन्द्रहासप्रतिस्फुरद्वक्त्रपरम्परत्वात् ।
छिन्नप्ररूढानि भविष्यदाजौ सज्जीकृतानीव शिरांसि बिभ्रत् ॥

प्रतिक्षणं प्रौढमदाट्टहासविस्पष्टदंष्ट्रेन्दुकलामयूखैः ।
समन्ततः सान्द्रभयावधूतनिशाचरव्रातनिशान्धकारः ॥ ७ ॥

गतायुषा केन कृतासि निग्रा निपादिता शूर्पणखे! मया कः ।
इति प्रवृद्धप्रतिघः स पृच्छंस्तया रुदत्या जगदे दशास्यः ॥ ८ ॥

मुनिः पुरान्तर्ज्वलदौर्ववह्निमम्भोधिमाचम्यदिति प्रतीहि।
यदद्य युष्मद्भुजपालितोऽयं भग्नो जनो रावण! मर्त्यकीटात् ॥ ९ ॥

तथाहि रामो रघुराजसूनुः सहानुजस्तिष्ठति दण्डकायाम्।
येन प्रतापोद्भटसौविदल्ला बन्दीक्रियन्ते तव कीर्त्तिदाराः ॥ १० ॥

स मन्मथः किन्तु पुरां निहन्तुर्नेत्रानलप्लोषदशानभिज्ञः।
विधुः स्वयं किन्तु विधुन्तुदास्यरन्ध्रान्धकूपान्तरनापतिष्णुः ॥ ११ ॥

धनुष्मतामग्रसरः स एव प्रतापभाजां प्रथमः स एव।
किमन्यदन्यानपहाय सर्वे तमेव पर्याव्रणते गुणौघाः ॥ १२ ॥

तदङ्गसौन्दर्यमुदेष्यदुच्चैरुदारमात्मापजयाय मत्वा।
शङ्के स्मरः शङ्करनेत्रवह्नौ वपुः स्वकीयं जुहवाम्बभूव ॥ १३ ॥

रतिस्तु पत्युर्विपदा विदूना तपस्तदुग्रं ध्रुवमाततान।
येनान्यजन्मन्यपि रामनाम्नस्तस्यैव सीतेति बभूव दाराः ॥ १४ ॥

तस्यास्तु कः स्तोतुमहो महत्या वपुःश्रियः स्फीतिमतीन्दिरायाः।
पृथक् पृथक् स्तुत्यतया[1] स्थितानां समुच्चयः सा हि वधूगुणानाम् ॥ १५ ॥

सुधांशुनीलोत्पलविद्रुमाणां नवाम्बुदाम्भोजमृणालिकानाम्।
रम्भामणीकुम्भशिरीषदाम्नां तस्यास्तनुः सारसमाहृतिः सा ॥ १६ ॥

नैल्येन च स्निग्धतया च धत्तामिन्द्रोपलस्तत्कचभारशोभाम्।
इदं कुतो विन्दतु नन्दितालि नैसर्गिकं सौरभमेतदीयम् ॥ १७ ॥

आरालनीलालककालिकालीकालीकृताग्रस्य ललाटनाम्नः।
अर्धस्य चन्द्रस्य तमालपत्रं तस्याः कलङ्कार्धरुचिं बिभर्ति ॥ १८ ॥

भ्रुवोर्युगं किञ्चन कुञ्चिताग्रं वदन्ति तस्या मदनस्य चापौ।
द्विचापता तस्य किलोपपन्ना किमिक्षुचापो नहि पुष्पचापः ॥ १९ ॥

विशालनीलाम्बुजपत्रशोभे विलोचने हन्त विदेहजायाः।
तवास्यचन्द्रेष्वपि सत्सु राजन्नेकास्यकृच्छ्रे मनुजस्य लग्ने ॥ २० ॥

सुवर्णकर्णाभरणोत्थितानां मिषेण नीलाश्मरुचिच्छटानाम्।
तस्याः कपोलौ मृगनाभिपङ्कपत्रावलीचित्रतरौ चकास्तः ॥ २१ ॥

१. 'स्ताव्यतया' ख. पा.

स्मितार्धभिन्नोष्ठपुटप्रसूतैः सन्ध्यानुलिप्तैरिव चन्द्रपादैः ।
दन्तांशुभिः प्रांशुभिरावनेयी विलोभयत्यद्य परं चकोरान् ॥ २२ ॥

वीतप्रतिद्वन्द्वितया तदीयौ कुचौ मिथः स्पर्धितुमारभेते ।
सुवृत्तयोरुन्नतयोस्तयोरप्यतीव सङ्घर्षरतिः किमेतत् ॥ २३ ॥

नीलाङ्गुलीयोपलभृङ्गसङ्गमुग्धाङ्गुलीकोरकचारुमूर्त्तेः ।
तत्पाणिनालाभिनवप्रवालात् तरुप्रवाला न भिदामयन्ते ॥ २४ ॥

नितान्तपीनो जघनस्थलस्य स्थूलस्य चास्याः स्तनमण्डलस्य ।
एकोऽपि पूर्वोत्तरयोः कृशीयानन्तादिवद्भावमुपैति मध्यः ॥ २५ ॥

रम्भां बलात्कर्तुमुपक्रमो मे पुरा वृथाभूदिति मा विषीद ।
इमां तु रम्भाधिकसौकुमार्यामूरुद्वयीमार्य ! लभस्व तस्याः ॥ २६ ॥

प्रवालयोरेकतरं तरुण्यास्तस्याः पदद्वन्द्वतुलामुपैतु ।
अन्यत् तु यद्यप्यरुणं तथापि च्युतं ततो मार्दवमात्रभङ्गात् ॥ २७ ॥

अलं गिरा देव ! किमप्सरोभिः किमत्र विद्याधरसुन्दरीभिः ।
इयं तु लोकत्रयरत्नभूता लोकैकवीरस्य तव प्रियास्तु ॥ २८ ॥

त्वदर्थमेनामपहर्तुकामा रामानुजेनाशु विरूपिताहम् ।
मूर्तिः स्ववीर्येण सुधां जिघृक्षोरिन्द्रानुजेनेव पुरा सुरारेः ॥ २९ ॥

पुनर्जनस्थानचराः खराद्याः सरोपमेतावभिषेणयन्तः ।
तथा भवन्ति स्म भवद्बलाढ्या यथा कथाशेषतया स्थिताः स्युः
[॥ ३० ॥

इतीदमाकर्णयतोऽस्य चित्ते त्रपाभयक्रोधमयान् विकारान् ।
बलाद् विजिग्ये दशकन्धरस्य स्त्रीशब्दनिष्ठो बलवान् मनोभूः ॥ ३१ ॥

भृशं निशश्वास विजृम्भमाणो मुहुर्व्यधूनोन्मुखचक्रवालम् ।
दध्यौ च निध्याय विदेहपुत्रीं प्रत्यक्षवच्चेतसि पङ्क्तिकण्ठः ॥ ३२ ॥

अथात्मनाश्चित्तविकारमुच्चैः स्वस्रे स्फुरच्चिह्नमपह्नुवानः ।
स चन्द्रहासे विहिताट्टहासं निधाय दृष्टीरिदमाचचक्षे ॥ ३३ ॥

मृगादिवाधूतसटो मृगारिस्तृणादिवाशान्तधगन्तवह्निः ।
मनुष्यडिम्भात् परिभूतिमाप्तः किं किं स लङ्कापरमेश्वरोऽपि ॥ ३४ ॥

मन्ये मनुष्याधम ! किं त्वमाजौ जेतारमिन्द्रस्य विजेष्यसेऽहम् ।
महोतरां हास्यतमोऽसि भीतिमध्यापयेत् त्वां मम चन्द्रहासः ॥ ३५॥
ज्ञातोऽसि यस्त्वं जहि सुन्दपत्नीं सुबाहुमभ्यर्दय दुर्दमस्त्वम् ।
अरे ! विराधं निगृहाण बाणैरिति त्वमस्मासु कृतापकारः ॥ ३६ ॥
स्वसुर्निकारः खरदूषणादेर्मद्भृत्यवर्गस्य वधश्च वह्निः ।
अह्नाय ते धक्ष्यति कक्षदाहं मनोः प्रभूतं मनुजस्य वंशम् ॥ ३७ ॥
इति ब्रुवन्नुत्कटसिंहनादः सिंहासनादुत्थितवान् दशास्यः ।
धुतासियष्टिस्फुरदग्निविद्युदुद्द्योतमानो घनवन्महाद्रेः ॥ ३८ ॥
चिरं विमृश्याधिगताभ्युपायः सीतापहारं प्रति संप्रतीतः ।
सूतोपनीतेन रथेन गच्छन्नवाप मारीचतपोवनं सः ॥ ३९ ॥
रामास्त्रभीतेन जटाधरेण निरस्तहिंसादिकुलव्रतेन ।
विषोज्झितेनेव भुजङ्गमेन तेनोपजुष्टः स जगाद धृष्टम् ॥ ४० ॥
नमोऽस्तु ते मातुल ! न श्रुतं ते रामस्य तत् कर्म सहानुजस्य ।
वयं त्वदः स्मर्त्तुमपि प्रकामं त्रपामहे धिक् किमुताभिधातुम् ॥ ४१ ॥
वदामि कार्यादथवा तवेति हस्ते गृहीत्वाथ स ताटकेयम् ।
स्वसुर्विपत्तिं स्वचिकीर्षितं च कर्णे लगित्वा कथयांबभूव ॥ ४२ ॥
निशम्य तं निर्भरभीतिकम्पप्रमोहसंभ्रान्तमना मुहूर्त्तम् ।
तूष्णींस्थितः सुन्दसुतोऽथ मन्दं निवर्त्तयिष्यन्नपथस्तमूचे ॥ ४३ ॥
किमात्थ नक्तंचरचक्रवर्त्तिन् ! बिभेमि धीरोऽप्यहमिक्षुचापात् ।
यतो मया पङ्क्तिरथात्मजस्य पत्नीमुपाहर्त्तुमुपाक्रमीति ॥ ४४ ॥
रामादिदानीं दयितापहारे भेतुं भवानर्हति गर्हणीये ।
अहो मनस्ते विपरीतमास्ते माराद् बिभेतीति विभो ! किमेतद् ॥ ४५ ॥
कुले विधातुर्विमले प्रसूतिर्मतिरतु शास्त्रार्णवपारपान्थाः ।
भावानुबन्धो हरिणाङ्कमौलौ परस्त्रियामुत्सुकता कुतस्ते ॥ ४६ ॥
स्थिरा तिरश्चामपि पश्य राजन्नधर्मतो भीः किमुतास्मदादेः ।
कोकाः सशोका अपि नान्यदास्था नक्तं वियुक्ता निजवल्लभाभिः ॥ ४७ ॥

१. 'भिप' ख. पाठः.

जगत्त्रयीजित्वरदोःसहायो न वज्रपाणेरपि यो बिभेति ।
कथं नु स त्रस्यतु पुष्पचापादहो महत् ते परिहासदाक्ष्यम् ॥ ४८ ॥

अमित्रदन्तावलकुन्तनोत्कः स मर्त्यवेषो हरिरेव रामः ।
कथं स्वदंष्ट्रामिव कृष्यमाणां प्रियामुपेक्षेत पुरः परेण ॥ ४९ ॥

इतो निवर्त्तस्व भजस्व लङ्कां लङ्कापते ! कापथगस्तु मा भूः ।
अभीष्टमप्यर्थमुदर्कदुष्टं विज्ञाय विज्ञा हि परित्यजन्ति ॥ ५० ॥

त्राता स्वयं कौशिकसप्ततन्तोः सुबाहुबाहूरगवैनतेयः ।
न्यवीवृतन्मामखिलादकृत्याद् गुरुः स मे रावण ! रामबाणः ॥ ५१ ॥

इति ब्रुवाणेऽनुपसंहृतोक्तौ निशाचरे तत्र निशाचरेन्द्रः ।
रोषातिताम्राक्षतयातिरूक्षो बभाण निष्कोशितचन्द्रहासः ॥ ५२ ॥

अरे ! न धर्माध्वनि संशयालुराचार्यकार्यं समशिश्रयं त्वाम् ।
यावन्न खड्गाहितरामिषत्वं प्रयासि तावत् कुरु शासनं नः ॥ ५३ ॥

मायामृगीभूय मनुष्यडिम्भाद् दूरं समावर्जय तां मृगाक्षीम् ।
दर्शाद् विमुक्तामिव चन्द्रलेखामेनां मदक्ष्णां नय गोचरत्वम् ॥ ५४ ॥

स इत्थमुद्घूर्णकृपाणपाणेर्निदेशमिन्द्रद्विषतोऽनुमेने ।
परं शरीरप्रवणा हि भीतिर्निपातयत्येनसि धीमतोऽपि ॥ ५५ ॥

व्यवस्थितान्तः स च पापजातिकूपादितो भक्तिलतावलम्बः ।
पदं सदानन्दरसाभिरामं रामास्त्रनिःश्रेणिकयाधिरोढुम् ॥ ५६ ॥

स तत्क्षणं तत्र विचित्ररत्नज्योतिश्छटाविच्छुरितान्तरिक्षः ।
व्यवर्त्ततोत्तप्तसुवर्णवर्णः सङ्कीर्णदुर्वर्णखुरः कुरङ्गः ॥ ५७ ॥

ततस्तमालोक्य पुरः स्फुरन्तं विसिष्मिये च क्षणदाचरेन्द्रः ।
वियत्पयोधिप्लवनप्लवेन द्रुतं रयेणोदचलच्च लोलः ॥ ५८ ॥

अथाम्बरस्थेन च तेन दूरं व्यापारितैराक्षिपुटैरधस्तात् ।
पुष्पाणि चिन्वत्युटजोपकण्ठे पपे सुधामूर्तिरिवावनेयी ॥ ५९ ॥

स्तनद्वये द्वे चरणद्वये द्वे पाणिद्वये द्वे जघने चतस्रः ।
अथावशिष्टास्तु दशापि तस्या मुखाम्बुजे तस्य दृशो ममज्जुः ॥ ६० ॥

स कण्टकैः स्वेदजलावसिक्तैरापुङ्खमग्नाङ्गजबाणपक्षैः ।
नवाभ्रधारोत्क्षितकोरकाङ्कं विडम्बयामास कदम्बवृक्षम् ॥ ६१ ॥
तथोत्सुके तस्थुषि पङ्क्तिकण्ठे कुण्ठेतरैरङ्गरुचिप्रपञ्चैः ।
कल्पद्रुमीकृत्य वनद्रुमौघं मिथ्यामृगः पञ्चवटीं प्रपेदे ॥ ६२ ॥
स वल्गितैर्वल्गुविलासरम्यैरुद्ग्रीविकोच्चावचविक्रमैश्च ।
पत्युर्मुखादप्यवनेः सुताया जहार चित्तेन सहाक्षिपद्मे ॥ ६३ ॥
अथोत्सुका तेन मृगेण रामं सा चाब्रवीदेनमुपाहरेति ।
तथेति सद्यः स च सन्ननाह क्व चाप्रवृत्तिर्भवितव्यतायाः ॥ ६४ ॥
हस्ताग्रगम्यत्वमनुज्झतोऽपि यदा स तस्य ग्रहणं न लेभे ।
तदातिदूरभ्रमणावसन्नो निनाय बाणाग्रिपतामथैनम् ॥ ६५
तद्बाणभिन्नः प्रकृतिं प्रपन्नः पपात भूमौ स च यातुधानः ।
हा लक्ष्मणेत्यार्तरवेण सीतामभूमुहच्च व्यसुतामगाच्च ॥ ६६ ॥
नैमित्तिकं चापि निमित्तनाशे नश्येदिति प्रायिक एव वादः ।
संस्थां गतस्यापि यदस्य माया भूयोऽपि भूमेस्तनयां बबाधे ॥
तथाहि पत्युर्विपदं विशङ्क्य प्रस्थापयामास च लक्ष्मणं सा ।
अथाग्रतः कृत्रिमभिक्षुवेषं विलोकयामास निशाचरेन्द्रम् ॥ ६८ ॥
तथार्घ्यपाद्यादिभिरातिथेय्या कृतः कृतातिथ्यतया कृतार्थः ।
तथ्यं निजोदन्तमुदाहरन्त्या पृष्टश्च हृष्टः स वचो बभाषे ॥ ६९ ॥
यः श्रूयते सुन्दरि ! मन्दराद्रेरुद्धारकः शङ्करवासभूमेः ।
विश्रान्तविश्रान्तविशालकीर्तिः स रावणोऽहं रजनीचरेन्द्रः ॥
अनाकरोद्भूतमनर्घमुर्व्यामयोग्ययोगोपहतं यदास्ते ।
रत्नं तदिन्द्रादिभिरप्यलङ्घ्यां लङ्कापुरीं नेतुमुपागतोऽस्मि ॥ ७१ ॥
विहाय दुःखं विपिनाधिवासं विश्वाधिनाथं भज रावणं माम् ।
शच्यापि यत् प्रार्थितदुर्लभं तल्लभस्व मुग्धे ! गृहिणीपदं नः ॥ ७२ ॥
बन्दीकृतानां सुरसुन्दरीणां मन्दारमालामधुवासितेषु ।
दूरावनम्रेषु शिरःसु नित्यं निधेहि वैदेहि ! निजाग्रपादम् ॥ ७३ ॥

१. 'सद्वल्गि' ख. पाठः

इति वदति मदाददान्तचित्ते दशवदने मदनेन चाभिभूते ।
भयविवशतया भृशं चकम्पे जनकसुता कदलीव वातनुन्ना ॥

तदनु स रुदतीं विमुक्तकण्ठं रथमधिरोप्य जवेन तां नताङ्गीम् ।
प्रकृतिमुपगतो नितान्तभीमामभिवियदुत्पतितो निशाचरेन्द्रः ॥

तमथ मलयशैलरन्ध्रनीडो निशमितपङ्क्तिरथस्नुषाविलापः ।
अरुणदरुणसूनुरभ्रमार्गे विततपतत्रपुटस्फुटो जटायुः ॥ ७६ ॥

गरुदनिलविलोलिताम्बुराशिर्गरुडकुलप्रभवः स गृध्रराजः ।
तुहिनगिरिरिवोच्चकैरभासीदनधिगतक्षतिपक्षतिर्महेन्द्रात् ॥ ७७ ॥

निर्ऋतिकुलकलङ्क ! तिष्ठ तिष्ठ क पुनरिमामपहृत्य गच्छसि त्वम् ।
दशरथसुहृदस्मि पक्षिराजस्तव मदखण्डनपण्डितो जटायुः ॥ ७८ ॥

शतमखशतकोटिपाटनोऽपि स्थिरसुरवारणकुम्भदारणोऽपि ।
मम पुनरतिचण्डतुण्डलीढस्त्रुटनमुपैष्यति ते स चन्द्रहासः ॥ ७९ ॥

अहह बहु विकत्थसे किमित्थं विहगकुलाधम ! कस्त्वमस्मदग्रे ।
अपि दशवदने विपक्षभावं वहसि यदेधि ततश्चिरं विपक्षः ॥ ८० ॥

इति परुषगिरौ परस्परं तौ
पथि मरुतां पतगेन्द्रराक्षसेन्द्रौ ।
नखमुखविशिखासिभिः प्रहृत्य
भ्रमदमरं समरं प्रचक्रमाते ॥ ८१ ॥

अक्षान्तपक्षपवनक्षुभिताभ्रसिन्धौ
शस्त्रास्त्ररुद्धसुरवर्त्मनि संप्रहारे ।
रक्षोधिनाथरथकार्मुकबाणतूणी-
श्चिच्छेद पक्षिपतिरच्छिदुरप्रभावः ॥ ८२ ॥

रोषभारपरुषो दशानन-
स्तापितस्य समरेण भूयसा ।
पक्षिणः प्रवयसो निकृत्तवान्
पक्षमूलमथ दक्षिणं क्षणात् ॥ ८३ ॥

---

१. 'गृध्र' ग्र॰ पाठः

सीतानुशिष्टरघुवीरमुखारविन्द-
सन्दर्शनावधिकजीवितधारणेऽस्मिन् ।
पत्रीश्वरे पतति सत्त्वरलङ्घिताब्धि-
र्लङ्कामविक्षदथ राक्षसचक्रवर्ती ॥ ८४ ॥

अशोकवनिकाभुवं दशमुखेन नीता सती
वृता निशिचरीगणैर्बहलधूमधूम्रप्रभैः ।
भृशं विरहशोषिता निकटवर्तिधूमग्रहां
कलाममृतदीधितेरनुजहार सा जानकी ॥ ८५ ॥

इति श्रीरामपाणिवादविरचिते राघवीये महाकाव्ये
नवमः सर्गः ॥

---

## अथ दशमः सर्गः ।

रामस्तावत् ताटकेयं निहत्य प्रत्यावृत्तश्चेतसा कातरेण ।
मध्येमार्गं मार्गितात्मप्रवृत्तिं लज्जानम्रं लक्ष्मणं वीक्षते स्म ॥ १ ॥
पृष्टोदन्ते शंसति स्त्रीस्वभावादुक्तं यद्यत् सीतया वीतशङ्कम् ।
तत् तत् प्रत्याख्यायकं स्वस्य तस्मिन् मूर्छामार्छद्राघवोऽमोघधैर्यः ॥
गोदावर्या वातपोतोपनीतैः शीतैरम्भोजन्मधूलीपरीतैः ।
कल्लोलोत्थैः शीकरैस्तत्प्रमोहः शान्तिं निन्ये वृद्धये नूनमाधेः ॥ ३ ॥
गत्वा तत्र ज्योत्स्नयेव त्रियामामुत्सर्पन्त्या ज्वालयेवाग्निवेदीम् ।
हासोद्भासेवाब्जिनीमालुलोके सीतादेव्या वर्जितां पर्णशालाम् ॥ ४ ॥
हा हा देवि ! क्व प्रयातासि रामं हित्वा पिण्डं भौतिकं चेतनेव ।
को वा कोपः सापराधो न रामो मोहादित्थं तेन सास्रं विलेपे ॥ ५ ॥
पुष्टश्रीकं पूर्णचन्द्राभिरामं विस्तीर्णाक्षं विस्फुरन्मन्दहासम् ।
नेत्रानन्दं कुत्र ते वक्त्रमित्थं शोचं शोचं सोऽपतन्नष्टसंज्ञः ॥ ६ ॥
आर्य ! स्थैर्यं प्राप्नुहि त्वद्विधाश्चेदेवं नाम क्लीबतामाश्रयन्ते ।
धैर्यादीनां कोऽवकाशो गुणानामित्याश्वासं लम्भितो लक्ष्मणेन ॥ ७ ॥

कालक्षेपो नोचितस्तावदार्यामन्विच्छावः सर्वतः पर्वतेऽस्मिन् ।
स्वेच्छा कोपात् क्वापि तिष्ठेन्निलीना देवीत्येवं तद्वचः सोऽनुमेने॥८॥

तीरे तीरे वापिकानां नदीनां मूले मूले भूरुहां वीरुधां च
सानौ सानौ सानुजः पर्वतानां भूयो भूयः सोऽथ तामविन्येष॥९॥

तत्रापश्यत् क्वापि विक्षुण्णपक्षं रक्तोद्गारप्लावितोत्तुङ्गगात्रम् ।
सन्ध्याम्भोदश्लिष्टविन्ध्याद्रिकल्पं पक्षिश्रेष्ठं भूमिपृष्ठे लुठन्तम् ॥ १०॥

गत्वोपान्तं कस्त्वमित्थं गतो वा कस्मादित्थं रामभद्रेण पृष्टः ।
वृत्तं वृत्तं वर्णयञ्जीर्णगात्रं तत्याजास्मिन्नक्षि निक्षिप्य पक्षी ॥ ११ ॥

तद्गात्रं द्रागग्निसात्कृत्य तस्मै दत्त्वा भक्त्या सोऽपि नैवापमम्भः ।
चक्रे पित्र्यं सौहृदं तत्र शुद्धं सत्पुत्रत्वं नाम कामं प्रदुग्धे ॥ १२ ॥

भ्रात्रा सत्रा लङ्घिताध्वा ततोऽग्रे वीक्षाञ्चक्रे विश्वबन्धुः कबन्धम्
आस्यश्वभ्रं बिभ्रतः कुक्षिभागे वृत्तिर्यस्य प्राणिभिः पाणिलग्नैः ॥१३॥

तस्याजस्रद्रोहिणो देहभाजां बाह्वोरेकाश्चिच्छिदे राघवेण ।
अन्यः सद्यो लक्ष्मणेनाप्यताक्षि प्रक्षीणांहास्तावदेवं जगौ सः ॥ १४ ॥

दिव्येष्वेकोऽहं दनुर्नाम पूर्वं दुर्व्यापाराद् राक्षसत्वं प्रपन्नः ।
काबन्ध्यं च प्रापितो वज्रिणाथो वामे दैवे ह्यापदः सानुबन्धाः ॥ १५ ॥

यात्वादेशस्यास्य मे यः प्रयोक्ता सोऽयं प्रीतस्तापसो मामवादीत् ।
रामो यावद् भूमिरन्ध्रं नयेत् त्वां तावत् प्रत्यापत्तिलाभस्तवेति ॥ १६ ॥

त्वत्सम्पर्कस्तर्कितोऽस्माभिरर्को यस्यावाप्तेरस्मदज्ञानरात्रिः ।
व्युष्टा दिष्ट्या राम ! सत्यं यदाहुः सत्सम्बन्धो बन्धमोक्षस्य हेतुः ॥१७॥

भूमिश्वभ्रे तत् त्वमस्मत्कबन्धं निक्षिप्यादः पांसुभिः पूरयेति ।
आपन्नेन प्रार्थितस्तेन रामः सर्वं तस्मै यद्धितं तच्चकार ॥ १८ ॥

विद्युत्पिङ्गैरङ्गकान्तिप्रवाहैरुत्पत्योच्चैर्दिव्यदीव्यत् स दिव्यः ।
भव्यैर्वाक्यैरव्यवच्छिन्नसारैः स्तावं स्तावं तावदूचे च रामम् ॥ १९ ॥

वारिक्रीडासक्तमातङ्गयोषिद्भूषागुञ्जापिञ्जरीभूतवीचिः ।
अत्रादूरे भाति पम्पाभिधाना वापी कापि भ्रमिदम्भोजराजिः ॥ २० ॥

तस्याः पारे दूरतुङ्गैः शिरोभिर्व्योमोल्लङ्घी सानुमानृश्यमूकः ।
तस्मिन्नास्ते पूर्वजेनाभिभूतः सुग्रीवाख्यो वानरो भानुसूनुः ॥ २१ ॥
बालक्रीडाभग्नलङ्केन्द्रदर्पो वाली चैतत्पूर्वजः शौर्यशाली ।
हृत्वा दारान् दूरमेनं निरास्थद् वीर्यायत्तो हीष्टभोगास्तिरश्चाम् ॥ २२ ॥
सुग्रीवं तं विच्युतं यौवराज्याद् द्वित्रैर्युक्तं वानरैरात्मगृह्यैः ।
कृच्छ्रादस्मादुद्धर स्वार्थसिद्धैः सोष्मा स स्यान्मण्डलस्थो यथार्कः ॥२३॥
यद्वा युष्मत्सान्निधानाज्जडोऽपि प्रत्युत्पन्नप्रौढशक्तिर्ननु स्यात् ।
अश्मेवाह्वां पत्युरंशुप्रसङ्गादित्युक्त्वा स व्योमचारी तिरोभूत् ॥ २४ ॥
तौ तु स्थानं प्राप्य पुण्यं शबर्यास्तत्संसृष्टामग्रहीष्टां सपर्याम् ।
दृष्ट्वा चैनां व्यस्मयेतां वपुः स्वं हव्यं कृत्वा जुह्वतीं योगवह्नौ ॥ २५ ॥
पाण्डुच्छायः स प्रियाविप्रयोगाद् बिभ्राणोऽन्तः शोकमूर्च्छाकलङ्कम् ।
पम्पां वापीं रामचन्द्रः प्रपेदे पूर्वामाशां पूर्णचन्द्रश्च भेजे ॥ २६ ॥
यत्र श्च्योतन्मुग्धमध्वाम्रलेशान्यर्धोन्मीलत्पत्रपक्ष्मावलीनि ।
आबिभ्राणाः कुड्मलाक्षीणि मन्दं निद्रामुद्रां तत्यजुः कैरविण्यः ॥२७॥
अम्भोजिन्या दत्तपत्रार्गलेषु क्षिप्ताः सायं कोशगुल्मेषु भृङ्गाः ।
प्रत्याकृष्टा राजपादाश्रयत्वादत्युत्सिक्तैर्यत्र कल्हारगन्धैः ॥ २८ ॥
यत्र क्षीबैश्चन्द्रिकाशीधुपानादारक्ताक्षैस्तारघूत्कारकण्ठैः ।
स्त्रीभिः सार्धं तीरवानीरकुञ्जेष्वत्यारम्भि स्वैरलीला चकोरैः ॥ २९ ॥
बिन्दुस्यन्दैरिन्दुकान्तस्थलीनां सम्भिन्नत्वादम्भसां किन्नु वृद्धिः ।
यद्वा कोकीशोकबाष्पोदभारैरित्युद्वीचिः शङ्किता यत्र पम्पा ॥ ३० ॥
मध्येकृत्य स्मारनाराचधारामन्तर्जाड्यं कामिनो यो विधत्ते ।
स व्याधुन्वन्नुत्पलानां रजांसि प्रौढामोदो यत्र वाति स्म वातः ॥ ३१ ॥
तस्मिन् काले विप्रयोगव्यथाभिर्दूराक्रान्तः क्लान्तसर्वेन्द्रियः सन् ।
भ्रात्रा स्वाङ्के धारितो लब्धमोहः संज्ञां किञ्चित् प्राप्य रामो व्यलापीत्
[॥ ३२ ॥
हा वैदेहि ! प्रेक्षणीयत्वमिन्दोस्तत्पादानां तापनिर्वापितां च ।
शीतस्पर्शप्रेष्ठतां चानिलानां हृत्वा देवि ! क्व त्वमन्तर्गतासि ॥ ३३ ॥

उत्प्रेक्षेऽहं वत्स ! सम्भ्रान्तमीने हीनच्छायं वारि बिम्बं यदिन्दोः ।
तत्सङ्काशं भीतिलोलाक्षितारं दृष्टे रक्षस्याननं मत्प्रियायाः ॥ ३४ ॥

सीतावक्त्रादस्य येनापकर्षस्तं व्यामोहादङ्कपङ्कं प्रमार्ष्टुम् ।
मज्जत्यम्भस्येष दोषाकरोऽस्मिन् नक्तं नक्तं नायमस्यानुबिम्बः ॥३५॥

दर्शे दर्शे चन्द्रमाश्चण्डरश्मेरन्तेवासी दाहविद्यामधीते ।
अभ्यावृत्तिस्त्वत्र बुद्धिप्रमोषान्मन्ये सोऽपि स्यादनध्यायपाठात् ॥ ३६॥

तन्मे देवि ! त्वन्मुखं चिन्त्यमानं धत्ते तापं हा कुतः शीतशीलम् ।
यद्वा युक्तं चन्द्रबिम्बे सतापे तस्यापि स्यात् तद्गुणस्तत्सनाभेः ॥ ३७॥

कर्णं देहि श्रूयते वत्स वत्स ! प्रेयस्या मे मञ्जुमञ्जीरनादः ।
कांश्चित् कालं क्वापि कोपान्निलीय प्राप्ता मन्ये मानिनी सानुतापा ॥

अन्यस्त्रीणां सङ्कथामप्यकुर्वन्नुर्वीपुत्र्याः सापराधः कथं स्याम् ।
उत्प्रेक्ष्याथ प्रेयसि प्रायशोऽसूरागो रागादाशु कुप्यन्ति नार्यः ॥ ३९॥

इत्युत्थाय प्रस्थितं तं प्रणम्य प्रोचे वाचं लक्ष्मणः साश्रुकण्ठः ।
नायं देव्या आर्य ! मञ्जीरनादस्तत्संवादी हंसनादः किलायम् ॥ ४० ॥

नीता सेयं रावणेनेति गृध्रात् किं नाश्रौष्व श्रोत्रशल्यं ह्युदन्तम् ।
युद्धे हत्वा तं दुराशं नराशं प्रत्यानेतुं तद् यतिष्यावहे ताम् ॥ ४१ ॥

स्वस्यैवास्याज्जाग्रतः कृष्यमाणां मृष्येतापि क्वापि दंष्ट्रां मृगेन्द्रः ।
अन्येन स्वां योषितं स्पृश्यमानां को वा लोके सोढुमीष्टे मनस्वी ॥ ४२ ॥

इत्थं तस्मिन्नचुषि क्रोधवातव्याधूतोन्मादाम्बुवाहानुषङ्गः ।
सीताजानेस्तावदुत्साहसूर्यः स्वान्तव्योमन्युच्चकैरुच्चकाशे ॥ ४३ ॥

तीर्त्वा पम्पामात्तकोदण्डबाणौ मूर्तौ साक्षादस्त्रवेदाविवोभौ ।
सावष्टम्भैर्ऋश्यमूकस्य सानौ पादन्यासैश्चेरतू राघवौ तौ ॥ ४४ ॥

येनाधीता भास्वतः शब्दविद्या यस्मादर्वाक् सर्वगीर्वाणसारः ।
सोऽयं वीरस्तत्र ताभ्यां पुरस्तादीक्षामासे भिक्षुवेषो हनूमान् ॥ ४५ ॥

क्षोणीपृष्ठे तत्पदान्यर्पितानि भ्राजद्राजीवारिशङ्खाङ्कितानि ।
दृष्ट्वा तुष्टेनात्मनोद्बुद्धतत्त्वो गत्वोपान्तं मारुतिस्तौ ववन्दे ॥ ४६ ॥

१. 'नाम यस्या', २. 'किं' ख. पाठः.

सूर्याचन्द्रौ किं युवामुन्नतेच्छाविन्द्राविष्णू किन्तु गोत्रावतीर्णौ ।
इत्थं तेन प्रश्रितेनानुयुक्तावब्रूतां तावात्मवृत्तान्तमस्मै ॥ ४७ ॥

स प्रोवाच स्वं वपुर्दर्शयित्वा सुप्रातोऽयं वासरो मे नृसिंहौ ! ।
अन्वेष्टव्यौ योगिनामप्यनन्तावक्षणा धेयौ यस्य जातौ भवन्तौ ॥ ४८ ॥

सुग्रीवश्च भ्रातृनिष्कासितत्वादेतावन्तं कालमापन्निमग्नः ।
अद्य श्वो वा प्राप्तराज्यः स मन्ये दीनोद्धारो वंशधर्मो यतो वाम् ॥

सानावद्रेः सञ्चरन्तौ भवन्तौ दृष्ट्वा शत्रोः शङ्कमानोऽपसर्पौ ।
त्रासादेष प्रैषिषन्मां विवेक्तुं क व्याक्षेपो वस्तुतत्त्वज्ञता क ॥ ५० ॥

जातो वातादञ्जनायां जनोऽयं भृत्यः सत्यं वानरो भानुसूनोः ।
ज्ञातः कैश्चिन्नाम नाम्ना हनूमान् द्रष्टव्योऽसौ दासदृष्ट्या
[भवद्भ्याम् ॥ ५१ ॥

इत्याख्याय स्थेयसीभक्तिमेनं भूयो भूयः पादमूले पतन्तम् ।
हस्तग्राहं तावदुत्थाप्य रामो लक्ष्मीधाम्ना वक्षसा पर्यलब्ध ॥ ५२ ॥

अङ्गादङ्गदन्तरेवाप्रमान्तं रोमोच्छ्वासच्छद्मना निष्पतन्तम् ।
आविभ्राणो मारुतिः प्रीतिभारं दूरानम्रः किञ्चिदाह स्म भूयः ॥

अस्मिन् शैले वालिनो न क्रमेते पादावादौ यन्मतङ्गस्य शापात् ।
तस्मादास्ते नास्तिभीरत्र भैत्रिर्मैत्रीमिच्छन्नापदुद्धारधीरैः ॥ ५४ ॥

त्रासादेनं त्रातुकामौ भवन्तौ मन्ये वीरौ माननीयानुभावौ ।
इष्टावाप्तिप्रीतिफुल्लार्थिवक्त्रप्रेक्षातोऽन्यः को हि दातुर्विनोदः ॥ ५५ ॥

दीन दीने भूरिकारुण्यभाजो नापेक्षन्ते निष्क्रयं सत्क्रियासु ।
तेभ्यः किं वा लिप्सवश्चातकानामार्त्तिं लुम्पन्त्यम्बुदाः स्वाम्बुदानैः ॥

येनापि स्यादात्मशोभाविलोपः सोऽपि त्याज्यो धीमता नाश्रयार्थी ।
यत्सम्बन्धादात्मनोऽभूत् कलङ्को नोज्झत्यद्याप्येनमेणं यदिन्दुः ॥ ५७ ॥

इत्थंवादी राघवेणाभ्यभायि प्रीतिस्निग्धं वीक्षमाणेन वीरः ।
वाणोऽयं मे पाणिना बद्धसख्यः सुग्रीवस्य क्षेमकारो हनूमन् !
[॥ ५८ ॥

अस्मद्वंशस्यादिभूतो विवस्वानस्याप्यासीज्जन्महेतुर्यदासौ ।
सख्यं नाभूदावयोः किं तदैव प्रेम्णः कः स्यादास्पदं भ्रातुरन्यः
[॥ ५९ ॥

तद् गच्छामस्तत्र यत्रायमित्थं दत्तानुज्ञं सानुजं रामभद्रम् ।
अंसद्वन्द्वे बिभ्रदभ्राणि भिन्दन्नध्यारुक्षन्माल्यवन्तं हनूमान् ॥ ६० ॥

सुग्रीवस्तं बाणकोदण्डपाणिं दृष्ट्वा हृष्टो विष्टपानामधीशम् ।
वायोः पुत्रादस्य तत्त्वं विदित्वा चक्रे साष्टाङ्गो रयोगं प्रणामम् ॥ ६१ ॥

उत्थाप्यैनं भद्र ! भद्रं तव स्तादस्तारातेरस्तु साम्राज्यलाभः ।
इत्याशीर्भिर्वर्धयामास रामः सोमो यद्वत् कान्तिभिः सिन्धुराजम्
[॥ ६२ ॥

तत्राजय्यं सङ्गतं तेनतुस्तौ साक्षिण्यग्नावेधमाने पुरस्तात् ।
अद्वैराज्यं राज्यमाहृत्य दातुं प्रत्यज्ञासीदेककोऽन्यस्तु सीताम् ॥ ७३ ।

अत्रैकस्मिन् भानवे राघवेण व्यातन्वाने साकपेकेन सख्यम् ।
अन्यस्तावद् बालिना रावणेन द्वाभ्यामैच्छन्मत्सरेणेव सन्धाम् ॥ ६४ ॥

देव्या रक्षोनीतया सीतयास्मानुद्दिश्य प्रागुज्झितानि ह्यमूनि ।
इत्थं तस्मै दर्शयामास तस्याः सर्वाङ्गीणान्यर्कजो भूषणानि ॥ ६५ ॥

आदायामून्यादरादीक्षपीक्षं प्रत्युद्दीप्तस्फीतविश्लेषखेदः ।
हा देवीति व्याहृतार्धोक्तिरस्रैरापूर्णाक्षो मोमुहीति स्म रामः ॥ ६६ ॥

सिक्त्वा सिक्त्वा शीकरैर्निर्झरिण्याः सान्द्रस्निग्धैः पल्लवैर्वीज्यमानः ।
सुग्रीवेण प्राप्तसंज्ञः स चक्रे वाग्भिर्नीतिश्चाञ्जनेयेन धैर्यम् ॥ ६७ ॥

ज्यानिर्घोषैरद्रिरन्ध्रान्तरालप्रत्युद्गीर्णैर्घूर्णिताणोंधियादाः ।
सुग्रीवाद्यैः पञ्चभिरन्वितः स्वैः किष्किन्धां प्रत्यार्त्तबन्धुः प्रतस्थे
[॥ ६८ ॥

मध्येमार्गाद् दुन्दुभेरस्थिकूटं पादाङ्गुष्ठेनोत्क्षिपन्नद्रिसारम् ।
छिन्दन्नेकेनेषुणा सप्त सालानभ्रद्वन्द्वं तापनेः सोऽपनिन्ये ॥ ६९ ॥

१. 'रा' स्त्र. पाठः.

सुग्रीवोऽथ प्राप्य तस्याभ्यनुज्ञामाह्वास्तोच्चैरग्रजं विग्रहाय।
सैव प्रेष्ये दृश्यते प्रेषितुर्या शक्तिः स्तब्धेऽप्यश्मनीवोष्णरश्मेः ॥ ७०॥

कस्कोऽयं भो ! हन्त कल्पान्तवह्नावह्नाय स्वं भस्मसात्कर्तुमेति।
उच्चैरित्थं व्याहरन्नाहवाय प्रत्यागच्छद् विक्रमी शक्रसूनुः ॥ ७१॥

रे सुग्रीव ! स्फारदिग्वारणालीकेलीशैलानेत्य नृत्यन्ति ये ये।
ते ते भीतिभ्रान्तभूतप्रणूताः किं ते जाल्म ! प्रस्मृता मत्प्रतापाः॥

आर्यस्त्वं नः सत्यमत्यन्तवैरादारम्भस्ते हन्त सर्वोऽप्यनार्यः।
न्यक्कारोऽयं दुःसहस्तं कियन्तं कालं बालिन् ! बालवत् सा·
[सहीमि ॥ ७३॥

किं नास्माकं सन्ति दन्ता नखाश्च प्रायस्तिर्यक्सम्भवाः शस्त्रिणो ये।
धिक् तं मूढं साधनेऽप्यप्रहीणे तुल्यस्थेभ्यो यः परस्माद् बिभेति॥

इत्यन्योन्यक्षेपिणोर्द्वन्द्वयुद्धं तत्रोदासीद् बालिसुग्रीवयोस्तत्।
येनाधूता वेल्लदुल्लो(कल्ल)कूटप्रौढाटोपग्रस्तमुद्राः समुद्राः॥ ७५॥

नम्रोन्नम्रक्षोणिभागातिभारत्रुट्यत्पृष्ठाष्ठीलकूर्माधिराजे।
मुष्टीमुष्टिप्रक्रमोत्पिष्टसिन्धौ दन्तादन्तिप्रायभूयःप्रहारे॥ ७६॥

दूरोद्यच्छत्पुच्छविच्छिन्नगर्भादभ्रान्मुक्तैरम्बुभिः पूरिताशे।
युद्धे तस्मिन्नुद्धतादिन्द्रसूनोः सुग्रीवेण द्राक् पराजीयते स्म॥ ७७॥

भीतो धावन्नस्रदिग्धाखिलाङ्गो रामं प्राप्य प्राह हा निर्जितोऽस्मि।
रामश्चैनं मा भवानत्र भैषीत् तस्य क्षिप्रं निग्रहण्मीत्यवोचत् ॥ ७८॥

द्वयोर्भिदां विविदिषुणा रणे तयोः सरूपयोर्वनलतया सपुष्पया।
गलान्तरे रघुतनयेन जग्रथे जयश्रियो वरवरणस्रजेव सः॥ ७९॥

पुनरपि समराङ्गणं प्रपद्य स्फुटरवमाह्वयमानमर्कसूनुम्।
सशपथमथ तारया निरुद्धोऽप्यतिरभसादभिजग्मिवान् कपीन्द्रः॥

प्लवङ्गप्रवीरावसङ्ग्रामयेतामभङ्गाभिमानप्रसङ्गातिघोरम्।
नदन्तौ गभीरं मदं तौ वहन्तौ बृहन्ताविवाशान्तदन्तावलौ द्वौ॥

तरुमूलनिलीनमूर्तिरुग्रं तरसा दाशरथिर्मुमोच बाणम् ।
निपपात स तेन भिन्नवक्षा हतपक्षाचलसन्निभश्च वाली ॥ ८२ ॥

उत्खाय बाणमुरसो रुधिरावधौत-
नामाक्षरं तमवलोक्य गतार्थचेताः ।
सुग्रीववक्षसि निविष्टतनुर्मनस्वी
धीरं जगाद परितः स निसृष्टदृष्टिः ॥ ८३ ॥

इतस्तावद् राम ! त्वमसि हिमशीतप्रकृतिरि-
त्यशेषाक्षिप्रीतेः पदमिति कलानां निधिरिति ।
सुधासूतेस्तुल्यो जगति विदितस्तत् कथमहो
महत् क्रौर्यं धत्से मयि निरपराधेऽपि मतिमन् ! ॥ ८४ ॥

इति वदन्तमुपेत्य मृदुस्मितो
रघुपतिस्तमुवाच शुभां गिरम् ।
अनुजयोषितमाहृतवान् बलात्
त्वमसि वानर ! तेन विनीयसे ॥ ८५ ॥

दण्डितो नृपतिना खलु दण्ड्यः
पातकेन रहितो दिवि दीव्येत् ।
इत्यदः[1] कृतमिति प्रवदन्तं
वीक्ष्य राममविशद् दिवमैन्द्रिः ॥ ८६ ॥

तारायाः शुचमङ्गदस्य युवराजत्वप्रतिज्ञामृतैः
सुग्रीवस्य तु मूर्धनि प्रपतितैः शीताभिषेकाम्बुभिः ।
नीत्वा शान्तिमवाप माल्यवदगप्रस्थं कृतार्थो विभुः
सिद्धार्थो रघवस्तया खलु सतां या नाम सिद्धार्थता ॥ ८६ ॥

इति श्रीमद्रामपाणिवादविरचिते राघवीये महाकाव्ये
दशमः सर्गः ।

---

पूर्वार्धं समाप्तम् ।

---

१. 'त' ख. पाठः।

## अथ एकादशः सर्गः ।

तस्य निर्जितनिजश्रियः श्रिया निर्जयार्थमिव सज्जकार्मुकैः ।
अस्यमाननवशीकराशुगैः प्रावृषेण्यजलदैरुदैयत ॥ १ ॥
लम्बमानजलबिन्दुमौक्तिकैस्तैरुदूढतडिदूर्ध्वतन्तुभिः ।
नृत्यतामनुगिरं कलापिनामम्बरे बत धृता वितानता ॥ २ ॥
प्रस्फुटत्कुटजपुष्पहासिनी कोरकावृतकदम्बकण्टका ।
प्रोषितानुमिलितेषु तेषु भूरुल्ललास रमणेष्विवाङ्गना ॥ ३ ॥
निःश्वसन्त इव ते पुरोनिलैः स्वेदवन्त इव चोदबिन्दुभिः ।
दूरदीर्घवियदन्तलङ्घनात् सश्रमा इव विशश्रमुर्गिरौ ॥ ४ ॥
आवृता सितसिलिन्ध्रमण्डलैरिन्द्रगोपशबला वसुन्धरा ।
फेनिलामनुचकार बारिधेरम्बुसन्ततिमपुद्रविद्रुमाम् ॥ ५ ॥
नृत्तडिण्डिमरवः शिखण्डिषु स्मारचापनिनदो वियोगिषु ।
हंससंसदि विवासहुङ्कृतिर्जृम्भते स्म रसितं पयोमुचाम् ॥ ६ ॥
अर्जुनाश्रयशिखण्डिविभ्रमो धार्त्तराष्ट्रशकुनिव्यथाकरः ।
राघवं प्रति घनागमस्तदा भावि भारतरणं न्वसूचयत् ॥ ७ ॥
केकिपिञ्छकचभारवाहिनीं मल्लिकामुकुलदन्तशोभिनीम् ।
मारुतो धृतबृहत्पयोधरामालिलिङ्ग गिरिमेखलावधूम् ॥ ८ ॥
भृङ्गझङ्करणमन्त्रजापिना धूतकैतकपरागभस्मना ।
साधकेन भुवि तेन लम्भिताः स्तम्भितं न कतमे वियोगिनः ॥ ९ ॥
तत्र संहतघनान्धकारिते शैलसानुविपिने वनेचरैः ।
चक्रवाकमिथुनस्य केवलं क्रन्दितै रजनिरन्वमीयत ॥ १० ॥
बालनीपपरिरम्भसम्भ्रमच्छिन्नहारगुलिकानुकारिभिः ।
कोरकैरनिलवेगपातितैराववार नवमालिका भुवम् ॥ ११ ॥
उल्लसन्निचुलमञ्जरीमयैश्चामरैरुभयकूलभासुरैः ।
वाहिनीपतिपरिग्रहोचितामुद्धतामनुबभूवुरापगाः ॥ १२ ॥

---

१. 'धा' ख. पाठः.

कूलमुद्रहतरङ्गताडनक्षुण्णपातितकुलायभूरुहाः ।
विप्रकारपरुषैर्विहङ्गमैर्निन्दिताः कलकलच्छलेन ताः ॥ १३ ॥

कच्छसीमसु कदम्बकेसरैरापतद्भिरपिहितासु यानि ये ।
तानि जाम्बवफलानि षट्पदास्ते च जग्मुरितरेतरोपमाम् ॥

चारुवारिदघटाघटाहतैरम्बुभिः स्तनितमन्त्रपाठकः ।
तं पुरोऽनिलपुरोहितः शनैरभ्यषिञ्चदलघुं महीभृतम् ॥ १५ ॥

निर्झरप्रसरशुभ्रवर्चसो भूरिपुण्यजनवासवेश्मनः ।
तस्य नु स्फटिकपर्वतभ्रमान्नीलकण्ठ उपरि स्म नृत्यति ॥ १६ ॥

स्तोककोदरदरीनिचूषणाद् यावता विकलतां गताः पथि ।
तावता विरहिबाष्पवारिणा पूरिता भुवि पयोदवृष्टयः ॥ १७ ॥

प्रावृडान्दधदपह्नुताम्बरैरम्बुदैर्न दिश एव केवलम् ।
यन्मनोभवशराग्निदीपितं कामिचित्तमपि तत् तु कौतुकम् ॥

नात्र काननमभूदबर्हिणं बर्हिणश्च न विहीनताण्डवाः ।
ताण्डवानि च विना न कूजितं कूजितं च न नृणाममोहनम् ॥

शैलसानुनि मतङ्गकानने पुष्पितप्रचुरवृक्षवीरुधि ।
राघवो युगशतायितक्षणान्यत्यवाहयदहानि कानिचित् ॥ २० ॥

अब्रवीदथ सगर्भ्यमुत्सुको वत्स! लक्ष्मण! कथं न पश्यसि ।
मेघपुष्पशरवृष्टिमुत्सृजन्नेष तावदतुरेव मन्मथः ॥ २१ ॥

एष शोषयति केतकीरजोधूसरेण पवनेन मे मनः ।
दीपयत्यथ च नीपकेसरच्छद्मना भृशतरं कृशानुना ॥ २२ ॥

क्वापि केकिगलमेचकच्छवीरन्यतः कुटजषण्डपाण्डराः ।
कुत्रचित् स्फुटकदम्बपाटला हा कथं बत विलोकये दिशः ॥

रक्षसा कृतमिदं तु युज्यते वैरनिष्क्रयमुपेक्षते हि कः ।
धिग्धिगप्रतिविधानकोविदान् वैरमे महति नः श्वसन्मृतान् ॥

कस्तवास्ति परिरक्षितेति सा रावणेन बहुशोऽपि भर्त्सिता ।
आर्यपुत्र इति वक्तुमुत्तरं व्रीडिता जनकजा न पारयेत् ॥ २५ ॥

इत्युदश्रु विलपन्नपावृतस्वान्तवृत्तिरतिधीरधीरपि ।
दुःसहव्यथतया रघूत्तमः प्रावृषं कथमपि व्यजीगमत् ॥ २६ ॥

तत्क्षणोन्मिषितसान्द्रचान्द्रिकाहासभासुरसुधाकरानना ।
कामिनीव कलितामलाम्बरा तावदाविरभवत्तरां शरत् ॥ २७ ॥

प्रावृषि प्रणयितां विमुञ्चता वल्लभेन रविणा प्रसादिताः ।
कालुषीं घनमयीं जहुर्दिशः सान्त्वनावधिरुषो हि योषितः ॥ २८ ॥

भास्करः स्वकरशोधनीशनैरम्बराङ्गणतलान्यमीमृजत् ।
तद्भवावकरविभ्रमं दधुर्जर्जरा जलमुचः क्वचित् क्वचित् ॥ २९ ॥

ईषदुन्नमितपङ्कजाननामुच्चलज्जलतरङ्गकम्पिताम् ।
अब्जिनीमनुनयन्निवारवैराचुचुम्ब मधुपः शनैः शनैः ॥ ३० ॥

अम्बुजानि कुमुदैः[१] समं जलादुन्ममज्जुरृतुराजगौरवात् ।
उत्सवे सुहृदि राज्ञि च स्वतः स्पर्धिनामपि मिथो हि संहिता ॥ ३१ ॥

मण्डलापतितहंसपाण्डरच्छत्रदर्शितविभुत्वसम्पदः ।
काशराशिमयचामरस्य किं तस्य नाम घटते न राजता ॥ ३२ ॥

पाकपिङ्गकलमोपयोगिभिर्गीयमानसुभगोदयः शुकैः ।
नीलकण्ठकुलकण्ठमुद्रणाद् दुर्यशो निजमजीगणन्न सः ॥ ३३ ॥

दारितान्मुदिरहास्तिमस्तकान्निःसृतैरुडुकदम्बमौक्तिकैः ।
व्योमभूमिधरमास्तृणात् क्षणादृद्धशक्तिरृतुवीरकेसरी ॥ ३४ ॥

यातुधानरजनीविरामकृद् विश्वविप्लवतमोविमोचनः ।
उद्यमद्युमणिरुच्ययात्वथो रामभद्रहृदयोदयाचले ॥ ३५ ॥

योऽभिमातिमभियोक्तुमिच्छतामेति तद्व्यसनवत् सहायताम् ।
तस्य सत्यपि ऋतोर्विजृम्भणे येन कामुकतया चिरायितम् ॥ ३६ ॥

तत्र नूतनरसां प्रियामिव प्राप्य सम्पदमबोधबाधिते ।
मानवे किमपि कोपमुद्वहन् जानकीपतिरुवाच लक्ष्मणम् ॥ ३७ ॥

यः परार्थपरवत्तया परं शेष इत्यभिहितो भुजङ्गराट् ।
तं कथञ्चिदनुयातुमीहते यः स एव भुवने पुमान् पुमान् ॥ ३८ ॥

---

१. 'करैर', २. 'व्रजम' ... ४. 'जलदै' ख. पाठः,

स्वप्रयोजनरतोऽपि कश्चन स्यात् परार्थघटको निसर्गतः।
इन्धनादनपरोऽपि पावको नान्धकारमपहन्ति किं क्वचित् ॥ ३९ ॥

ये कुमार! निजकार्यसिद्धये प्राक् प्रतिश्रुतपरप्रयोजनाः।
सुस्थिताः पुनरहो उदासते तान्विना क्व निपतन्तु नः[1] शराः ॥ ४० ॥

तस्य सा किमभिषेकवारिणा क्षालिताद् विगलिता हृदः कपेः।
चामरव्यजनमारुतैरुत ध्वंसिता नु मयि बान्धवस्मृतिः ॥ ४१ ॥

वत्स! तत्सविधमेत्य सत्वरं गत्वरं समभिलष्य यः सुखम्।
भावि वज्रपतनं न पश्यति ब्रूहि तं हितमिदं मदीरितम् ॥ ४२ ॥

किं प्रयाणमभिलाषुको भवानग्रजप्रहतवर्त्मना सखे!।
सत्यलङ्घिनि जने यदस्य मे लग्नकः शितमुखः शिलीमुखः ॥ ४३ ॥

तद्विमृश्य जन एष दूयते दुर्यशोमलिनतामुपेयुषा।
यत् त्वया खलु मृगेण सूनुना भानुनापि भविता कलङ्किना ॥ ४४ ॥

यद्यपि स्वयमनूरुसारथिर्विश्लथावयवयानदुस्थितः।
प्रान्तरैकपथिकस्तथापि किं कल्पते स समयं विलङ्घितुम् ॥ ४५ ॥

ईदृशः कथमुदीक्षते भवानन्तिकं निजममुञ्चतः सदा।
आवयोर्घटयितुर्मुखं सखे! धर्ममर्मविदुषो हनूमतः ॥ ४६ ॥

सन्दिहान इव धर्मपद्धतौ पद्मयोनिरपि यत्र तिष्ठते।
नूतनेन भवता चिरन्तनः सोऽपि हन्त गणितो न जाम्बवान् ॥ ४७ ॥

इत्यमून्यनतिविस्तरं ब्रुवन्नक्षराणि विरराम राघवः।
ज्ञातविस्मृतहितार्थबोधिका न प्रपञ्चरसिका हि भारती ॥ ४८ ॥

दन्तकान्तिसुरसिन्धुवारिणि स्नानपुण्यमधिगम्य तद्वचः।
कन्दरप्रातिरवच्छलादभूत् किं गिरीशसुगृहीतमञ्जसा ॥ ४९ ॥

स प्रगृह्य गुरुशासनं जवाद् वानरीं पुरमवाप लक्ष्मणः।
तर्जितप्रलयमेघगर्जितैः प्रत्यरुन्ध च धनुर्गुणस्वनैः ॥ ५० ॥

द्वारमास्थितममुं निशम्य स स्फीतभीतिरधिभूर्वनौकसाम्।
रुष्टमेनमनुरोद्धुमादरादादिदेश विवशः स्ववल्लभाम् ॥ ५१ ॥

---

१. 'मे' क. पाठः.

साध्वसोद्गमितबाष्पधारया तारया चटुलनेत्रतारया ।
नातिदूरमपयातया तया सोऽभ्यधायि रघुवीरसोदरः ॥ ५२ ॥

त्वत्पदाम्बुजगतेर्दयस्व हे वीरहीर! मिहिरात्मजन्मनः ।
यत्र वैषयिकभोगवागुरायन्त्रिते मृगतयैव जृम्भितम् ॥ ५३ ॥

युष्मदर्पितविभूतिदर्पितग्रस्तबुद्धिरियतोऽपि वासरान् ।
न स्वमप्ययमबोधि किं पुनर्वारिवाहसमयातिवर्त्तनम् ॥ ५४ ॥

तस्य तत् परमभूदभीप्सितं खण्डितस्य निशि यौवतस्य यत् ।
पादपद्मपतनेषु लभ्यते केलिपङ्कजदलेन ताडनम् ॥ ५५ ॥

वारुणीमदविघूर्णितेक्षणं लुप्तवर्णरमणीयजल्पितम् ।
भ्रूविलासमधुरं वधूमुखं तस्य केवलमभून्महोत्सवः ॥ ५६ ॥

एवमाहतमबोधनिद्रया रम्यभोगरजनीमधिष्ठितम् ।
तं प्रभातपटहस्वनायितस्त्वद्धनुर्ध्वनिरसाववूबुधत् ॥ ५७ ॥

तत् प्रसीद दिननाथनन्दने मन्तुमत्यपि भवत्परायणे ।
स्वाश्रयस्य हि जनस्य चापलं क्षम्यते कृतिभिरूर्मिलापते ॥ ५८ ॥

इत्यवापितशमेन तेन सा सान्त्वनैरनुमतोपसर्पणम् ।
जाम्बवत्प्रमुखमन्त्रिसंयुतं भानुसूनुमनयत् तदन्तिकम् ॥ ५९ ॥

पादयोः प्रणतमुत्थितं च तं पाणिनाथ परिगृह्य लक्ष्मणः ।
आर्यसन्निधिमितो भजाम इत्यब्रवीदचलदग्रतश्च सः ॥ ६० ॥

अङ्गदादिभिरलङ्कृतामथो नीलतारनयनोपशोभिताम् ।
सम्प्रगृह्य हरिवाहिनीं प्रियां वानराधिपतिरेनमन्वगात् ॥ ६१ ॥

तौ च लक्ष्मणदिवाकरात्मजौ राममेत्य कलितप्रदक्षिणौ ।
दूरनम्रशिरसौ ममार्जतुस्तत्पदाम्बुजरजः सगौरवम् ॥ ६२ ॥

सादरं स हरिराजमब्रवीदङ्ग ! कच्चिदनुरक्तमण्डलः ।
चन्द्रमा इव नवोदयोज्ज्वलः स्वा धिनोषि कुमुदादिकाः प्रजाः
[॥ ६३ ॥

कच्चिदच्छिदुरशक्तिसम्पदः सिद्धयस्तव भवन्त्यविप्लवाः ।
कच्चिदर्थिजनसाधुरेधसे बुध्यसे न किमपायिनीः श्रियः ॥ ६४ ॥

किं न वेत्सि लभते यदीशितुर्मण्डलं न यशसा सुगन्धिताम् ।
तत्र पुष्प इव षट्पदावलिर्नैव जातु जनतानुरज्यति ॥ ६५ ॥

मन्त्रकोविदमपि प्रबाधते भूयशो भुवि नरेन्द्रमेव यत् ।
तद् बलादहिभयं भवत्कुलं कच्चिदास्पदयितुं न वाञ्छति ॥ ६६ ॥

किं ब्रवीषि हनुमन्! अमित्रतो मित्रजस्य भयसंभवः कुतः ।
मित्रवंशपतिरेव मित्रतामस्य यत् स्वयमुदूढवानिति ॥ ६७ ॥

तच्चतुर्दिशमितो विदेहजामार्गणाय बहुमार्गवेदिनी ।
वीरवानरचमूः प्रहीयतामित्यशासि विभुना हरीश्वरः ॥ ६८ ॥

सोऽपि शक्रगृहिणीं दिशं प्रति प्राहिणोद्विनतनेतृकं बलम् ।
अङ्गदाधिपमगस्त्यलाञ्छितां वारुणीमथ सुषेणपालितम् ॥ ६९ ॥

जाह्नवीजलसितांशुकाञ्चितस्कन्धबन्धुरगिरीन्द्रवल्लभाम् ।
शक्तिमच्छतबलिप्रणायकं पक्षयुग्ममितकालसङ्गरम् ॥ ७० ॥

तत्र दक्षिणदिगन्तगामिषु प्रौढबाहुबलमञ्जनासुतम् ।
आजुहाव विभुरक्षिसंज्ञया व्याजहार च समीपमागतम् ॥ ७१ ॥

माययानुकृतविश्वविग्रहैर्दुर्ग्रहैः परिवृता निशाचरैः ।
कुत्र विश्वसितु पुंसि जानकी किञ्च भीरपि विवेकलोपिनी ॥ ७२ ॥

तत् करे तदिदमर्प्यतां हरे! द्वापरापनयनोपकारकम् ।
इत्यदात् स निजनामलाङ्छितं तुङ्गकान्तिभरमङ्गुलीयकम् ॥ ७३ ॥

तदनु तदनुपाधिकप्रकाशं शिरसि वहन् प्रतिगृह्य सप्रणामम् ।
अरुणरुचिपिशङ्गजङ्गमाद्रिभ्रमकृदमुं परियन् बभौ हनूमान् ॥ ७४ ॥

अथ जाम्बवदङ्गदनीलनलैरपरैरपि वानरवीरभटैः ।
सहितः स हि तैरहितान्तकरः प्रययावभिविन्ध्यमवन्ध्यमतिः ॥ ७५ ॥

बलारातेः पौत्रं पथि हतहयग्रीवदनुजं
पुरस्कुर्वन्नुर्वीधरसरिदरण्येषु विचरन् ।
विचिन्वानः सीतामभजत शुभां कामपि गुहा-
मशून्यामास्वाद्यैः फलदलपयोभिः स बलवान् ॥ ७६ ॥

अथ तत्र सतीमतिप्रभां प्रणमन्तो हरयः स्वयम्प्रभाम् ।
तदुपाहितभोज्यसम्पदां परितृप्ता ययुरम्बुधेस्तटम् ॥ ७७ ॥

पक्षद्वयावधिकसङ्गरलङ्घनेन
प्रायोपवेशनपरेषु पयोधितीरे ।
पक्षद्वयेऽपि विहते नहि मृत्युरित्थं
सम्पातिरेषु कथयन्निव संप्रपेदे ॥ ७८ ॥

श्रीमद्रामायणाकर्णनजनितबृहत्पक्षपक्षीन्द्रगीतं
सीतोदन्तं निशम्यापि हि सलिलनिधेर्लङ्घनेऽनुद्यमेषु ।
प्रायः सर्वेषु निर्वासिततमजाडिमा जाम्बवत्सूक्तिगुम्फै-
र्दुर्वारः सर्वगर्वोच्चय इव तनुमानुज्जजृम्भे हनूमान् ॥ ७९ ॥

इति श्रीरामपाणिवादविरचिते राघवीये महाकाव्ये
एकादशः सर्गः

## अथ द्वादशः सर्गः

अम्भोधिं गगनमिवाशु लङ्घयिष्यन्
क्रव्यादस्तिमिरचयानिवोद्धरिष्यन्
आरुक्षन्महितमहामहेन्द्रशृङ्गं
पूर्वाद्रेः शिखरमिवांशुमान् हनूमान् ॥ १ ॥

उद्भ्रान्तभ्रमरविमुक्तपुष्पवृक्षा-
नुद्वेलप्रसृमरनिर्झरप्रवाहान् ।
उद्बुद्धक्षुभितगुहाशयोग्रसिंहा-
नाधोष्ट प्लवनभरेण सोऽद्रिभागान् ॥ २ ॥

ताराणां पथि पृथुजृम्भिकाविदीर्ण
दंष्ट्राग्रप्रकटितनैकचन्द्रलेखम् ।
व्याविध्यज्जलदघटाः सटाच्छटाभि-
र्नेत्रोद्यद्दहनशिखं मुखं दधानम् ॥ ३ ॥

लाङ्गूलभ्रमणसमुत्थचक्रवात-
प्रक्रीडानिबिडनिपीडितोडुचक्रम् ।
विन्ध्याद्रेः शिखरमिव प्रवर्धमानं
पीनोरस्तटघटितांशुमद्विमानम् ॥ ४ ॥

चूडाग्रप्रणिहितरामभद्रमुद्रा-
निर्मुद्रस्फुरदरुणोपलोपलब्धाम् ।
बिभ्राणं विपुलशिरोधिरूढभानो-
रुद्रिक्तामुदयमहीधरस्य शोभाम् ॥ ५ ॥

कण्ठोत्थैः स्तनितघनैः स्वनैरकुण्ठै-
रुत्कण्ठां नयदुपकण्ठनीलकण्ठान् ।
तद्गात्रं शरदिजवारिवाहशुभ्रं
बभ्राजे सचकितदृष्टमप्सरोभिः ॥ ६ ॥

निध्यातस्तदनु निजातिभारनम्र-
क्षोणीभृत्कुहरनिगीर्णवीचिमालः ।
प्रस्तीमस्तिमिकुलकेलिलोलिताम्भा-
स्तेनान्तर्विसृमरकम्बुरम्बुराशिः ॥ ७ ॥

उत्तुङ्गैरुपारिसमूढफेनकूटै-
रुल्लोलैरनुहरति प्रतिक्षणं यः ।
अर्धोद्यत्तुहिनकरांशुदीपिताग्रै-
राकीर्णानवनिधरैर्धराविभागान् ॥ ८ ॥

यत्प्रमद्विरसनफूत्कृतानिलेन
प्रोद्भूतान्यलघुतमान्यपां पृषन्ति ।
आश्लिष्य द्युपथमतो निवृत्तमाना-
न्यातन्वन्त्यति हि तरामनभ्रवृष्टिम् ॥ ९ ॥

यो वेलां प्रचुरतमालनीलकेशा-
प्रस्तोकस्तनरुचिशालिशैलपादाम् ।

आलिङ्ग्यमनवरतं तरङ्गहस्तैः
सस्त्रीकप्रमदमवाप्य दृप्यतीव ॥ १० ॥

कल्लोलग्रहणनपातितेष्वधस्ता-
देलालीसरसपरागवासितेषु ।
यत्रान्यद्विरदधियेव गण्डशैले-
ष्वाघातं विदधाति वारिवारणेन्द्राः ॥ ११ ॥

आवर्त्तः स्मरयति यं च तत्र तत्र
प्रत्युद्यन्नजितभुजाचतुष्टयस्य ।
आकृष्टात् प्रथममनेन मन्दराद्रे-
र्लब्धात्मा यदयमुदीक्ष्यतेऽधुनापि ॥ १२ ॥

यस्याम्भः क्वचन निपीय पीवराणा-
मुद्गच्छन्त्यभिदिवसावलिर्घनानाम्
आधत्ते निबिडमविन्धनस्य वह्ने-
र्धूमोऽसावुपरि विसर्पतीति शङ्काम् ॥ १३ ॥

शङ्खानाममलशशाङ्कखण्डपाण्डुः
सङ्घातो हरिमणिभासि यस्य तोये ।
सम्भ्राम्यन् परिदिशमुच्चकैश्चकास्ति
व्यूढाभ्रे वियति यथा बलाकिकानाम् ॥ १४ ॥

आपिङ्गैरनिलसुतस्य तावदक्ष्णोः
संपृक्ताः सकुतुकवीक्षिणो मयूखैः ।
तस्य क्वाप्यरहितविद्रुमा इवापः
कुत्रापि स्फुटवडवानला इवाभुः ॥ १५ ॥

उच्छ्रायच्छुरितसुरेन्द्रसौधाभित्ति-
स्तत्तावत्प्रथिमघनोऽपि विप्रकर्षात् ।
तेनाब्धेररिपुरवानवाचि कूले
व्यालोकि प्रत्युषि त्रिकूटकूटः ॥ १६ ॥

सोत्साहः सपदि लिलङ्घिषुः समुद्रं
विष्टब्धस्थितिरथ निश्चलोर्ध्वदृष्टिः ।
उत्पुच्छो भरनमिताद्रिरुन्नतांसो
हिक्कावानुदपतदम्बरं हनूमान् ॥ १७ ॥

गच्छन्तं गगनपथे पतत्रिकल्पं
पार्श्वाभ्यां जलदकदम्बमाक्षिपन्तम् ।
लिप्ताङ्गं कनकमयाङ्गुलीयभासा
दृष्ट्वा तं गरुडधियोरगैरभायि ॥ १८ ॥

मन्दारप्रसवरसोत्करः समीरः
स्वर्गङ्गाशिशिरतरङ्गशीकरार्द्रः ।
तस्याध्वक्लमशमवाञ्छयेव सूनो-
र्यत्नेन व्यधित तरस्विनोऽनुयानम् ॥ १९ ॥

अम्भोधेरुदरतलाद्विलासरम्यै-
र्निर्विष्टामुरगवधूजनैर्विभूतिम् ।
बिभ्राणो गरुदुरुवातधूततोया-
न्मैनाकस्त्वरितमथोज्जगाम शैलः ॥ २० ॥

अभ्याशं पवनसुतस्य सोऽभिगच्छ-
न्नाचख्यौ गिरमधिदेवतामुखेन ।
एषोऽहं तुहिनगिरेः सुतो हनूमन् !
मैनाकः प्रथमभवो भवस्य पत्न्याः ॥ २१ ॥

निःशेषक्षितिधरपक्षकक्षवह्ने-
र्मत्पक्षावभिपततोऽपि वज्रिवज्रात् ।
*पित्रा ते जलधरधार्मिणानिलेन
त्रातौ प्राङ् मकरनिकेतबन्धुनेमौ ॥ २२ ॥

क्रीडाद्रिर्वरुणगृहावरोधभाजां
जातोऽहं भुजगमृगीदृशां तदादि ।

*व्याख्यानुसारेण त्वस्यार्धस्य पाठभेदः कल्प्यः ।

कृच्छ्रे या तनुरपि लभ्यते प्रतिष्ठा
तामाहुः सुरपुरसम्पदो गरिष्ठाम् ॥ २३ ॥

अद्य त्वां सगरनृपान्ववायकेतो-
र्दूत्येन द्रुतममुना पथोत्पतन्तम् ।
आराद्धुं गमनपरिश्रमापनोदा-
दादिक्षत् प्लवगपते! स सागरो माम् ॥ २४ ॥

अस्मभ्यं यदुपकृतं प्रभञ्जनेन
प्रागेतद्द्वयमपि ते सभाजनेन ।
निष्क्रेतुं समयमयामहे महेच्छ!
प्राज्ञा यत् पितृसुतयोरभेदमाहुः ॥ २५ ॥

निर्धक्ष्यन्नरिपुरमीश्वरो यथा प्रा-
गुक्षाणं गुरुतरतुङ्गशृङ्गशोभम् ।
आरोह त्वमपि सखे! तथोन्नतं मा-
मेष त्वामचिरमितो नयामि लङ्काम् ॥ २६ ॥

पश्यैते फलभरनम्रनालिकेरा
नीरन्ध्रप्रचयविराजिराजरंभाः ।
खर्जूरीपरिणतपाकपाटलाभा
मत्पृष्ठे मधुरजलापगा वनान्ताः ॥ २७ ॥

यान्येषु प्रचुररसानि ते स्वदन्ते
तेषां त्वं सुभृशमशान मूलकानाम् ।
आहोस्विन्मधुरसवाहिनां फलानां
ध्वस्तोऽस्तु प्लवग! तवायमध्वखेदः ॥ २८ ॥

इत्युक्त्वा स च विरराम रामदूत-
श्चावादीदुचितगिरैव पूजितोऽस्मि ।
आ सिद्धेरधिपतिशासनस्य दासः
श्वासानामपि न विभुर्गिरे! निजानाम् ॥ २९ ॥

रक्षोघ्नस्त्वरयति शैल ! वालिशत्रो-
　र्बाणो मामसमरपतेः प्रियम्भविष्णुः ।
जानीते दशमुखकण्ठलुण्ठने यो
　मत्प्रत्यागमनविलम्बमन्तरायम् ॥ ३० ॥

अद्रक्ष्यो यदि विषमां विदेहपुत्री-
　विश्लेषग्लपितधियो विभोरवस्थाम् ।
नैवं मामणुमपि कालमध्वमार्गे
　विश्रान्त्यै सकरुणधीरचोदयिष्यः ॥ ३१ ॥

स्रग्भ्रान्त्या भुजगवधूमिवावनेयी-
　माहृत्य क्वचन वसन्नसौ दशास्यः ।
अद्यापि भ्रियत इति क्षितीशसूनो-
　र्वक्त्रेन्दुं मलिनयति त्रपाकलङ्कः ॥ ३२ ॥

यद्वा किं महति भवत्यपि प्रबोध्यं
　क्षोणीभृत् त्वमपि स लक्ष्मणाग्रजोऽपि ।
तुल्या वामसहनता विपक्षभावे
　छिद्राणामपिहितिविधिव्रतं च तुल्यम् ॥ ३३ ॥

तद्वाचं कुहरशतप्रतिक्वणाद्-
　व्याजेन स्वयमपि सोऽद्रिरन्ववादीत् ।
पन्थास्ते भवतु शिवोऽयमित्थमेनं
　संभाष्य द्रुतमविशच्च वारिराशिम् ॥ ३४ ॥

भानुः किं प्रपतति दक्षिणायनस्थो
　नैवं स्यान्नयनतुदो हि तन्मयूखाः ।
तत् कः स्यादयमिति वीक्षितः स लङ्का-
　वास्तव्यैरारिभिररङ्कताञ्जनेयः ॥ ३५ ॥

तं प्राप्य प्रतिभयधूमधूम्रमूर्त्ति-
　र्व्यात्तास्यप्रकटकरालदन्तपङ्क्तिः ।

काप्युच्चैर्निशिचरयोषिदाबभाषे
भो वक्त्रं प्रविश मम प्लवङ्गमेति ॥ ३६ ॥

वैदेह्या दशवदनेन वञ्चितायाः
वृत्तान्तं विविदिषुरेमि रामदूतः ।
कृत्येऽस्मिन्नुपघटिते ततस्तवास्यं
वेक्ष्यामि द्रुतमिति सोऽपि तामवादीत् ॥ ३७ ॥

कस्त्वं मे नयनपथादितोऽपयातुं
खादामि त्वदपघनान् घनाशनाया ।
इत्यास्यं कृतशतयोजनावकाशं
व्यादात् सा तदधिकमादिधत् स चाङ्गम् ॥ ३८ ॥

आस्थाय क्षणमणिमानमात्मवक्त्रं
गाहित्वा सपदि ततो विनिर्जिहानम् ।
आचष्ट प्रकृतिमवाप्य दीप्यमाना-
माश्चर्यस्तिमितदृशं तमानतं सा ॥ ३९ ॥

दाक्षायण्यहममितद्युते! हनूमन् !
प्रख्याता दिवि सुरसेति नागमाता ।
आदेशादनिमिषसंसदस्त्वदीयां
कृच्छ्रेषु स्थितिमवगन्तुमागतास्मि ॥ ४० ॥

मायाभिः प्रसितधियां महाबलाना-
मावासं तव विशतो निशाचराणाम् ।
धैर्यस्य च्युतिमभिशङ्क्य दुःख्यतीन्द्रः
स्नेहस्य प्रकृतिरहो विवेकशून्या ॥ ४१ ॥

मारीचप्रमथनदूत ! माययापि
स्थेम्नापि प्रतिभटपाटनौजसापि ।
दुर्धर्षं नृहरिमिवारिभिर्भवन्तं
संवेद्य त्रिदशपतिं विवर्धयामि ॥ ४२ ॥

भद्रं ते भवतु हरे! निराकुलस्तां
वैदेहीमरिनगरे निरीक्षिषीष्ठाः ।
इत्थं द्रागुपरचिताशिषा तयाथ
स्नेहाश्रुस्नापितदृशा तिरोबभूवे ॥ ४३ ॥

दण्ड्येषु प्रबलफलोच्चरोरुदण्ड-
श्चण्डत्वादरिभिरलङ्घनीयतेजाः ।
बिभ्राणो गुणमभितः सपक्षभावं
रामस्य प्रणिधिरदीपि बाणदीपम् ॥ ४४ ॥

तं काचिज्जलधिजलेशया चकर्ष
च्छायायामशिशिषयाथ सिंहिकाख्या ॥
तत्कण्ठं मुखकुहरेण गाहमानः
संवृद्धः सपदि ददार सोऽपि वीरः ॥ ४५ ॥

उद्भ्रान्तक्षतजझरीपरीतमुच्चै-
रुच्छूनप्रशिथिलबाहुदन्दशूकम् ।
तद्गात्राचलमुदधिः समापतन्तं
मन्थाद्रिं भयतरलाशयः शशङ्के ॥ ४६ ॥

इत्युग्रैर्विमततमोभरं निरस्यं-
स्तेजोभिर्गगनपथाद्विलम्बमानः ।
आपेदे पवनसुतस्त्रिकूटशैलं
देवश्च श्रुतिमयमूर्तिरस्तशैलम् ॥ ४७ ॥

तत्राग्रे तरुणमणिच्छटामरीचि-
व्याजेन प्रहसितशक्रलोकशोभाम् ।
सप्रौढप्रमदमदान्धयातुधान-
व्याकीर्णप्रचुरसुवर्णहर्म्यरम्याम् ॥ ४८ ॥

उत्तालध्वजपटजातमातरिश्व-
व्याधूतत्रिदशधुनीविनिःसृतानाम् ।
निष्यन्दैरनिशमपामपाकृतोष्णै-
रुद्यानैरुपहितधर्मममर्मघाताम् ॥ ४९ ॥

स्वर्वन्दीनयनजवारिधोरणीभिः
शुष्यन्तीरुपवनवृक्षवीरुदालीः ।
पौरस्त्रीमुखविधुसन्निधानवान्तैः,
सिञ्चन्तीममृतकरोपलाम्बुपूरैः ॥ ५० ॥

प्रागल्भ्यादनुकृतशक्रशक्रजित्कै-
रन्योन्यप्रथनाविडम्बनप्रवीणैः ।
सुव्यक्तमविहितजय्यजेतृचेष्टै-
राकूलसस्थविरहसां निशाटडिम्भैः ॥ ५१ ॥

आरूढद्विरदहयैरुदूढचापै-
रुन्मुक्तप्रगुणपृषत्कभिन्नलक्ष्यैः ।
रक्षोभिश्चिरखुरलीविहारखिन्नै-
र्निर्विष्टप्रमदवनान्तगन्धवाहाम् ॥ ५२ ॥

मन्दारप्रसवमधूनि मन्द्रतारं
गेयाभिः सुमुखितमाभिरर्पितानि ।
आस्वाद्य स्खलितपदोदितप्रचारैः
क्रव्यादैरनिशमहीनपानभूमिम् ॥ ५३ ॥

व्याधस्त्रीकठिनघनस्तनोपमर्द-
क्लान्तानामिव गतिमन्दतां गतानाम् ।
सम्पर्कादचलभुवां समीरणाना-
मस्वेदग्लपितवधूकपोलरेखाम् ॥ ५४ ॥

घोणान्तर्विवरविनिष्पतत्समीर-
प्रक्षुभ्यज्जलनिधितुङ्गवीचिभङ्गैः ।
कुत्रापि प्रकथितकुम्भकर्णनिद्रा-
मुद्राक्षीदमरविरोधिराजधानीम् ॥ ५५ ॥

तत्रेन्दावुदयति शीतलैर्मयूखै-
रालिम्पत्यमृतरसैरिवेक्षणानि ।
बुद्धायां मधुकरवन्दिवृन्दगीतै-
रामोदव्यतिकरभाजि कैरविण्याम् ॥ ५६ ॥

क्लान्तायां प्रियविरहस्य दुःसहत्वात्
क्रन्दन्त्यामपि च रथाङ्गनामवध्वाम् ।
सीतायामिव परितापिकामवस्थां
नीतायां दिनविलयेन रक्षसेव ॥ ५७ ॥

शृङ्गाग्रादवनिभृतस्ततोऽवतीर्णो
लङ्काश्रीमदमपनीय मुष्टिघातैः ।
अद्वारा त्रिमतपुरं प्रविश्य सीता-
मन्वेष्टुं द्रुतमुपचक्रमे हनूमान् ॥ ५८ ॥

संक्षिप्तमूर्तिरथ चत्वरचन्द्रशाला-
लीलाद्रिकन्दरसरस्तटनिष्कुटेषु ।
भूयः स रावणविभीषणकुम्भकर्ण-
प्रासादभूमिषु च भूमिसुताममार्गीत् ॥ ५९ ॥

अदृष्ट्वा वैदेहीमधिगतविषादेन मनसा
निजं मेने विद्वानपि विफलनिस्तीर्णजलधिम् ।
स तादृग् गम्भीरप्रकृतिरपि मुग्धोऽभवदिति
प्रतीमस्तेनापि भ्रमजलधिरिद्धो न सुतरः ॥ ६० ॥

यदृच्छयाप्यविशदशोककाननं
सपल्लवस्तवकविकासपाटलम् ।
कृशाकृतिर्विशदशशाङ्कसच्छविः
स हंसवत् स्फुरदरविन्दमण्डलम् ॥ ६१ ॥

तदनु स निकटे शिंशपायास्तरो-
रवनितलरजोधूसराङ्गद्युतिम् ।

विरहकृशतनुं जानकीं दृष्ट्वा-
झलदमलिनितां चन्द्रलेखामिव ॥ ६२ ॥

सैवेयं जनकात्मजेति मुमुदे शोकानलज्वालया
व्यालीढेति शुशोच रावणहतेरप्युच्चैरदृप्यत् क्रुधा ।
यत्नो मे फलवानभून्न जहती यद् दुर्बलानप्यसौ
संदष्टेति समाश्वसीदिति हरिर्नानारसोऽभूत् क्षणम् ॥ ६३ ॥

अवसरमनुपाल्य स्वैरमात्मप्रकाशं
प्रति समुचितकालव्यत्ययात्यन्तभीरुः ।
अविवृतनिजतेजाः शिंशपाग्रे स तस्थौ
दिनमिव दिननाथः प्रातरद्रीन्द्रमौलौ ॥ ६४ ॥

इति श्रीरामपाणिवादविरचिते राघवीये महाकाव्ये
द्वादशः सर्गः ।

---

## अथ त्रयोदशः सर्गः ।

अथामृतस्यन्दसुखैरपीन्दोरुत्कण्ठितेष्वग्निसखैर्मयूखैः ।
उद्दीप्तकन्दर्पतया दशास्यः सीतामुपारादुधुमनाः प्रतस्थे ॥ १ ॥
उद्भसद्रत्नकिरीटमालं व्यालोलकर्णाभरणाभिरामम् ।
परिस्फुरद्दीपसहस्रवाही तं पर्यचारीत् परिवारलोकः ॥ २ ॥
सचामरच्छत्रविचित्रमाल्याननर्घरत्नाभरणांशुकाढ्यान् ।
नवोपदार्थान् दधतः पदार्थान पुरो ययुस्तस्य भटाः सहस्रम् ॥ ३ ॥
कस्तूरिकाकुङ्कुमचन्दनाक्तैः सुगन्धिभिः सान्द्रहिमोदहारैः ।
प्रसाधयन्त्यः पदवीं पुरस्तात् प्रचेलुरुत्तुङ्गकुचास्तरुण्यः ॥ ४ ॥
चूत द्रं कं नूतनपुष्पजालं लोलम्बकल्माषितमञ्जरीकम्
वसन्तमुख्यैर्ऋतुभिर्वितीर्णं निन्युः प्रकाशं वनदेवतास्तम् ॥ ५ ॥
सीतोपकण्ठे प्रथमं नियुक्तैरन्यूनगानोचित*सूक्तिबन्धम् ।
जगत्त्रयीजित्वरमात्मवीर्यमुद्गापयामास स वन्दिवृन्दैः ॥ ६ ॥

---

* सूक्तिरूपम् इति व्याख्यासम्मतः पाठः

सरस्तरङ्गाम्बुकणेन पाद्यं सम्पाद्य वायुः सुमनोभिरर्घ्यम् ।
सेवाच्छलेन प्रतिलोमगामी प्रस्थानमस्खन्तमशंसदस्मै ॥ ७ ॥

ततः स माद्यन्मधुलेहिलीढान् किरन्त्यजस्रं मकरन्दबिन्दून् ।
पुष्पाणि बिभ्रद्भिरनोकहानां वृन्दैर्वृतं केलिवनं प्रपेदे ॥ ८ ॥

मध्याह्नसूरातपतप्तमूर्त्तेर्यथाध्वनीनस्य दवाश्रयाशे ।
तथाभवत् तस्य सुगन्धिपुष्पे पुष्पेषुदग्धस्य वने प्रवेशः ॥ ९ ॥

तत्रास तत्रासवसौरभेभ्यः स्मरातुरः केसरकेसरेभ्यः ।
स चम्पकानां *निकरे चकम्पे सशोकतामापदशोकराजौ ॥ १० ॥

अपारिजातोऽपि स पारिजाताद् बिभाय भूयस्तरपुष्पजातात् ।
मन्दारतोऽविन्दत मन्दिमानं निनिन्द वृन्दं हरिचन्दनानाम् ॥ ११ ॥

अथाविरामोद्गलदश्रुधारं भूरेणुरूक्षालकपीडिताक्षम् ।
वामे करे नम्रमुपादधानां निःश्वासतप्ताधरमाननाब्जम् ॥ १२ ॥

विशोष्यमाणां विरहेण पत्युः स्थले मृणालीमिव भानुभासा ।
महीशयां प्राप्य महीध्रपुत्रीं दशाननः सानुनयं बभाषे ॥ १३ ॥

विहाय मामुत्पततामसूनां दयस्व हे भामिनि ! मामकानाम् ।
ततोऽधिको यत् त्वयि मे प्रसादः स एव तेषामपरागहेतुः ॥ १४ ॥

शिलोच्चयेऽप्यप्रतिबन्धवीर्यं तदप्यमोघं कुलिशं मघोनः ।
यस्य स्थिरे वक्षसि कुण्ठमासीद् तं जेतुमीष्टे कुसुमायुधो माम् ॥ १५ ॥

हेलासमुत्क्षिप्तकुबेरशैला बलात्कृताशेषसुरावरोधाः ।
अमी भुजाः सन्त्यपि मे न सन्ति स्मरं निरोद्धुं न यतः क्षमन्ते
[ ॥ १६ ॥

ऐरावतस्याद्रितटद्रढिम्ना कुम्भद्वयेनाहतमप्यभीक्ष्णम् ।
वक्षो मम त्वत्कुचकुम्भयुग्मसङ्घर्षमप्राप्य न मां धिनोति ॥ १७ ॥

इमं मनाग्नम्रमयाननेन्दुमानन्दनं सुन्दरि ! चक्षुषां नः ।
यस्य प्रकाशे सति निष्प्रकाशो नालं तथा तापयितुं शशाङ्कः ॥ १८ ॥

---

* 'विपिने' इति व्याख्यासंमतः पाठः ।

वदस्व किञ्चिद् वरवर्णिनि! त्वं येनाधुना शान्तिमुपैतु दर्पः।
अमन्दमाकन्दमधूपयोगाद् विकस्वराणां च पिकस्वराणाम् ॥ १९ ॥

नाथा दिशामिन्द्रमरुत्सखाद्या नाथन्ति यं शश्वदपि प्रसादम्।
स एव नाथत्वमुमर्थमेव त्वां पङ्क्तिकण्ठो भुवनैकनाथः ॥ २० ॥

जीवन्ति याभिर्भुवने जनौघा यासां रतिर्नीचपथेन गन्तुम्।
तासां श्रियां भाजनमस्मि सीते! नितान्तगम्भीरमपामिवाब्धिः ॥ २१ ॥

सुमेरुमूलोपलशाणघृष्ट्या नित्यस्फुरच्चारुमरीचिभाञ्जि।
रत्नानि शेषाहिफणास्पदानि सहस्रमस्माभिरुपाहृतानि ॥ २२ ॥

वलस्य शत्रोः परमं धनं यः शचीकचालङ्करणप्रसूनः।
स पारिजातद्रुम एष सीते! लङ्कामलङ्कृत्य पुरस्तवास्ते ॥ २३ ॥

उर्व्यां पुनर्यत् खलु रत्नमर्घ्यं तदन्यलोकेष्वपि निःसपत्नम्।
त्वमेव सा सुन्दरि! तत् कथं मामुपेक्षसे भाजनमीदृशानाम् ॥ २४ ॥

मनुष्यमात्रप्रवणाशयत्वाज्जगत्पतिं मामवमन्यमाना।
खद्योतमाराधयसि त्रिसन्ध्यं प्रद्योतने सत्यपि दीप्यमाने ॥ २५ ॥

कनीयसा शक्तिमता स्वराज्यान्निष्कासितः शुष्कफलाशनस्त्वाम्।
मयाहृतां केसरिणा यथैणीं त्रातुं प्रगल्भेत कथं स रामः ॥ २६ ॥

प्रसीद सीरध्वजराजपुत्रि! प्रसाधय स्वेन तथोन्नतस्य।
ममाङ्कमानन्दकरी जनानां कलात्मनो मूर्त्तिरिवोदयाद्रेः ॥ २७ ॥

अबुद्धपद्मामिव पद्मवाटीममञ्जरीकामिव चूतशाखाम्।
अचन्द्रपादामिव यामिनीं त्वामभूषणामेवमवेक्ष्य दूये ॥ २८ ॥

प्रचेतसा मे प्रहितैरुदारैः षाण्मासिकैरिन्दुकरावदातैः।
मुक्ताफलैर्गुम्भित एष हारो विना क्व विश्राम्यतु ते स्तनाभ्याम् ॥ २९ ॥

समिद्धरागः स्वगुणैः परेषां गुणांस्तृणायापि न मन्यमानः।
नासामणिश्चैष मदेकधर्मा बिम्बोष्ठमाकाङ्क्षति चुम्बितुं ते ॥ ३० ॥

यदेकमाढ्यङ्करणं गरीयो मम प्रसादीकृतवान् कुबेरः।
तदेतदुत्तंसय शोणरत्नं प्राची हरित् प्रातरिवार्कबिम्बम् ॥ ३१ ॥

धनाधिपभ्रातरि दातरि त्वं मर्त्यं ब्रुवादीप्सासि किं नु मुग्धे !
घनं घने वर्षति सस्यपङ्क्तिः किमिच्छति स्वल्पघटाम्बुसेकम् ॥३२॥

बिभर्त्ति यो रत्नचयच्छलेन सदा मदाराधनजागरूकम्।
गणं ग्रहाणां स पतद्ग्रहोऽसावनुग्रहं वाञ्छति ते वराकः॥ ३३ ॥

अलं विशेषेण विदेहकन्ये ! मयि प्रसादो यदि जायते ते।
हर्ता वसूनां न स केवलं मे मूल्यातिगानामपितु ह्यसूनाम् ॥ ३४ ॥.

इति ब्रुवाणे कृपणं प्रणम्रे सक्रोधदृष्टे पवनात्मजेन।
दशानने सा तृणवन्निरास्था जगाद कृत्वा तृणमन्तराले ॥ ३५ ॥

हरन्ति ते रावण ! गाव एता नितम्बिनीर्यद्यपि लोलभावाः।
जगत्प्रकाशे क्वचिदस्खलन्तीं तथापि नेन्दोरिव पद्मिनीं माम् ॥ ३६ ॥

रणे रघूणां प्रभुणा नियुक्ताः शराः खरासृङ्मधुपानमत्ताः।
यावद् ग्रसिष्यन्ति न जीवितं ते वीराय मामर्पय तावदस्मै ॥ ३७ ॥

निजोष्मणाधःकृतसर्वलोके हविर्भुजां त्रातरि दीप्यमाने।
बलाधिके तत्र न शोभते ते वैरं कृशानाविव तूलराशेः ॥ ३८ ॥

त्वया वशीकर्त्तुमभीप्स्यते या तामेव सीतामुरगीमवेहि।
यस्या विषं दाशरथेः प्रकोपो निर्धक्ष्यसे राक्षस ! तेन सद्यः ॥ ३९ ॥

कथं त्वमम्भोजभुवः प्रणप्ता धर्म्यात् पथः प्रच्यवसे दशास्य !।
जन्यस्य यद्वा जनकाद् विभिन्नो गुणोऽस्ति दीपादिव कज्जलस्य
[॥ ४० ॥

भुजेषु लोकत्रयजित्वरेषु स्थितेषु तेष्वप्यकुतोभयेषु।
परोक्षमिक्ष्वाकुकुमारयोर्द्राक् कथं त्वयाहारिषि पञ्चवट्याः ॥ ४१ ॥

अंतोऽवगच्छाम्यपचन्द्रसूर्ये यथान्धकारस्य मुखे रजन्याः।
तथा तयोरक्षिरुचामभूमौ तव प्रगल्भेत परं प्रचारः ॥ ४२ ॥

अलं प्रपञ्चेन गिरां दुरात्मन्नितोऽपि यद्यस्ति जिजीविषा ते।
चिरं रिरंसा च सहात्मदारैस्ततो रघूणां पतिमाश्रयेथाः ॥ ४३ ॥

१. 'त' क. पाठः.

आकर्ण्य कर्णौ तुदतीः सुदत्या गिरः सरोषं धृतचन्द्रहासः ।
दशाननः पापचिकीर्षुरस्यां न्यवारि यत्नेन निजावरोधैः ॥ ४४ ॥

अथानुनीतावपि कर्कशां त्वामुपेक्षिता मासयुगं दशास्यः ।
अतः परं सान्त्वयिता कृपाणस्तवेति जल्पन् न्यवृतत् ततोऽसौ ॥ ४५ ॥

तदाज्ञया भीषयमाणमेनामानर्तितोग्रभ्रुकुटीकरालम् ।
शशाम वाग्भिस्त्रिजटोदिताभिर्निशाचरीणामथ चक्रवालम् ॥ ४६ ॥

तस्मिन् प्रसुप्ते सति रामदारैरारम्भि यस्तत्र विलापधर्मः ।
तस्य प्रशान्त्यै हनुमद्धनोत्था बभूव रामायणतोयधारा ॥ ४७ ॥

अये ! कुतस्त्येयमनभ्रवृष्टिरिमं जनं सिञ्चति शोकदग्धम् ।
इत्यक्षिणी विक्षरदश्रुणी सा प्रत्याशमक्षिप्यदविक्षताशम् ॥ ४८ ॥

माया स्विदेषा मनुजाशनानां मतिभ्रमस्यैव नु मे विवर्त्तः ।
इत्थं विशङ्कामलुनादमुष्याः स रामदूतोऽहमिति ब्रुवाणः ॥ ४९ ॥

जवादवप्लुत्य स शिंशपाग्रात् प्रदक्षिणीकृत्य कृतप्रणामः ।
कस्त्वं कुतो वेति कृतानुयोगामाचष्ट तां वाचमनाहतार्थाम् ॥ ५० ॥

हनूमदाख्यः कपिरस्मि यस्य प्रभञ्जनश्च प्रभवोऽञ्जना च ।
स्वामी स रामः स च वक्ष्यमाणः सुग्रीवनामा कपिचक्रवर्त्ती ॥ ५१ ॥

तथा नृशंसेन तवाहृताया गवेषणामाचरता वनेषु ।
वार्त्ता जटायोरवलूनपक्षादवेदि रामेण सलक्ष्मणेन ॥ ५२ ॥

स देवि ! पम्पां निकषा मदक्ष्णोः सुजन्मनोर्गोचरतामयासीत् ।
क्षामच्छवि त्वद्विरहेण वक्त्रं प्रभातचन्द्रप्रतिमं दधानः ॥ ५३ ॥

अचिन्तयं चैवमचिन्त्यधाम्नां विपत्तिरप्यस्ति परोपकारः ।
यस्याः प्रसादेन दुरासदोऽपि प्राप्तो मया सन्निधिरीदृशानाम् ॥

बालीति यः शक्रसुतो बलीयान् प्लवङ्गमानामभिभूः पुराभूत् ।
तस्यानुजन्मा तदपाहृतश्रीः सुग्रीवनामा विभुनान्वकम्पि ॥ ५५ ॥

रामेण बाणेन हतः स बाली स तत्पदे भानुसुतोऽभिषिक्तः ।
कुमारभोगे च महेन्द्रनप्ता किं किं न पुष्णाति सतां प्रसादः ॥

ततः कृतज्ञेन तव प्रवृत्तिं जिज्ञासुना भानुसुतेन दिक्षु ।
व्यापारितानां कपिसैनिकानामहं हि धन्योऽधिगतासि येन ॥ ५७ ॥

स तु त्वदास्यैरसुभिर्विहीनो निद्राति न स्नाति न रामदेवः ।
आकाशलक्ष्यैः करुणैर्विलापैरहस्त्रियामं म्रियते कथञ्चित् ॥ ५८ ॥

सङ्कल्पसम्पादितसन्निधानां ध्यानेन किञ्चित् किल वामशीलाम् ।
त्वां सान्त्वयिष्यन् प्रणतः स भूमौ सव्रीलशोकं कुरुते कुमारम् ॥

निशासु निष्यन्दितचन्द्रकान्ताश्चकोरचञ्चूपुटपीतशेषाः ।
स्मरातुरं सुन्दरि! चन्द्रपादास्तपन्ति सूर्यातपतापमेनम् ॥ ६० ॥

अथ त्वयास्तानि तदा मदाद्यैः प्रदर्शितान्याभरणानि पश्यन् ।
स पर्यदेवीदनु देवि ! यत् तत् किमन्यदाक्रन्दयदश्मनोऽपि ॥ ६१ ॥

तथावसन्नामपि चित्तवृत्तिं धैर्येण संस्तम्भयता निजेन ।
असेदुषा बन्धुजनस्य लाभात् सन्नह्यते तेन वधाय शत्रोः ॥ ६२ ॥

इदं च विस्रम्भविजृम्भणाय क्षितीश्वरेण प्रहितं हितं ते ।
इति प्रभोस्तस्य कराङ्गुलीयं तस्यै ददौ साञ्जलिराञ्जनेयः ॥ ६३ ॥

मुदा तदादाय विदेहपुत्री मुहुः प्रमोदाश्रुभिरार्द्रयन्ती ।
आलिङ्गदुद्यत्पुलकैः प्रतीकैः किञ्चोपगूढं प्रियमेव मेने ॥ ६४ ॥

जगाद चैनं सुमते ! हनूमन् ! ददासि मे जीवितमेव नान्यत् ।
प्रियादभिज्ञानसमागमो हि प्राणप्रदः प्रोषितभर्तृकाणाम् ॥ ६५ ॥

लङ्कोपविष्टापि नरेन्द्रसूनोरङ्कोपविष्टेव सुनिर्वृणोमि ।
स्त्रीणां हिताधानविधौ वियोगे वार्ताहरो वल्लभतो गरीयान् ॥ ६६ ॥

ततः पटान्तेन तिरोहितं यद् रत्नं घनेनेव दिनेशबिम्बम् ।
उन्मुच्य सा तत् प्रणताय तस्मै प्रत्यर्पयन्ती पुनरप्युवाच ॥ ६७ ॥

सत्योद्य ! न प्रत्ययवाञ्छयेदं पत्ये मयानुग्रहितं हनूमन् !
मायासु तद्व्यञ्जकमन्तरेण मा स्म प्रमाद्यत् स कदाचनेति ॥ ६८ ॥

अयं प्रसादस्तव राजकन्ये ! दाक्षिण्यवानभ्युपपद्यते माम् ।
इति ब्रुवन्नञ्जलिसंपुटेन प्रत्यग्रहीत् तत् प्रणतो हनूमान् ॥ ६९ ॥

उवाच *चैनामिदमेवमेव संभाव्यमन्याजधिया भवत्या ।
क्वचित् प्रमादो महतामपि स्यात् तमोमुखं यांति दिवाकरोऽपि॥७०॥
त्वं देवि ! साक्षात्कृतराक्षसौघा बिभेष्यविज्ञातहरिप्रभावा ।
तत् पश्य नो मूर्तिमिति ब्रुवाणस्तनूं हनूमानुदजृम्भयत् स्वाम्॥७१॥

व्याप्तव्योमान्तरालामविरलसरलस्थूलबालाग्रलोम-
व्याकीर्णाभ्रामदभ्रारवमुखकुहरस्पष्टदंष्ट्राकरालाम् ।
आरक्तोद्वृत्तनेत्रस्फुरदनलकणोत्पीडितोडुप्रचारा-
मारादालक्ष्य घोरां तनुमनिलभुवो भूमिकन्या चकम्पे ॥७२॥

बिभेमि हनुमन्नितो विमतदुर्ग्रहाद् विग्रहा-
दमुष्य पुरतो हरे ! ननु तृणानि रात्रिञ्चराः ।
तदेनमुपसंहर द्रुतमितीरितः सीतया
शशादपि तनीयसीं तनुमुदूढवान् मारुतिः ॥ ७३ ॥

देवि ! द्रक्ष्यसि वासरैः कतिपयैः सुग्रीवसुग्राहित-
प्रत्यर्थिच्छिदुरोपदेशनिहतक्रव्यादभव्योदयैः ।
आजुष्टं[2] हरिसैनिकैर्दशमुखग्रीवासृगापाटलान्
बिभ्राणं विशिखान् धनुश्च सहितं भ्रात्रा रघूणां पतिम् ॥ ७४ ॥

इति जनकतनूजामुक्तिभिर्मुक्तशोकां
विदधदसकृदेनामानमन्नादरेण ।
तदनु तदनुशिष्टामाशिषं प्राप्य दीप्रां
शरदमिव विवस्वानुद्दिदीपे हनूमान् ॥ ७५ ॥

इति श्रीरामपाणिवादविरचिते राघवीये महाकाव्ये
त्रयोदशः सर्गः ।

---

## अथ चतुर्दशः सर्गः ।

अथ निजनिभृतप्रचारजन्यं
स्फुटचरितैरयशो निराकरिष्यन् ।
अरहितबहुरक्षिराक्षसौघं
प्रसभमविक्षदशोककाननं सः ॥ १ ॥

---

१. 'यास्यति भास्करोऽपि, ख. पाठः २. 'क्रु' क. पाठः.
* 'चैनामिदमेव पत्यौ सम्भाव्यम्,' इति ...मातृसम्मतः पाठः ।

इभ इव सरसो मृणालदण्डा-
नपि पृथुलानुदपाटयद् द्रुमौघान् ।
अधिसमरमरीनपोद्धरिष्य-
न्नुप१रचयन्निव पूर्वतः स योग्याम् ॥ २ ॥

कलकलमुखरोत्पतत्पतङ्गा-
नवपतितप्रसवानुबद्धभृङ्गान् ।
करतलदृढपीडनावशीर्णा-
नकृत स हेमलतानिकुञ्जपुञ्जान् ॥ ३ ॥

कनकविटपिनां पटत्पटेति
त्रुटितवतां मुहुरस्य मुष्टिपातात् ।
पटुरटितमभूत् प्रवेशतूर्यो
मनुजभुजां पुरि नूतनो भयस्य ॥ ४ ॥

कठिनकरचपेटिकावदीर्ण-
प्रपतितशोणमणिच्छटाच्छलेन
अजनितकुलिशक्षतोऽप्यमुञ्चद्
रुधिरकणाननरोधकृत्रिमाद्रिः ॥ ५ ॥

मणिघटितबृहत्तटास्तटाका
मरतककुड्मलपद्मसन्नतोयाः ।
मयदुहितृपदाङ्किताक्तारा:
पवनभुवा परिपूरिताः शिलाभिः ॥ ६ ॥

सरभसमभियातयातुधान-
क्षपणकलानिपुणस्य तस्य गात्रम् ।
प्रकृतिधवलमप्यरिक्तरक्तं
हिमगिरिगैरिकशृङ्गमन्वकार्षीत् ॥ ७ ॥

निशमितनिजनिष्कुटप्रमाथो
दशवदनः प्रजिघाय यानि यानि ।
रणशिरसि कृतान्तसात्कृतानि
प्लवगवरेण बलानि तानि तानि ॥ ८ ॥

१. 'स' ब. पा.।

अथ पृथुपटिमा प्रहस्तपुत्रः
समभिजगाम रणाय जम्बुमाली ।
इह खलु नियतिर्द्वितीयपादे
ङयघटयदादित एव पञ्च वर्णान् ॥ ९ ॥

बलवति निहतेऽथ मन्त्रिपुत्रे
विशिखमुचो युधि पञ्च सैन्यनाथान् ।
परमनयत पञ्चतां हनूमान्
कृतममुना किमिहेति नैव जाने ॥ १० ॥

तदनु दशमुखः समादिदेश
प्रथितभुजाविभवं कुमारमक्षम् ।
स च रथमधिरूढवानुदग्रं
पवनसुतोऽपि जवेन तोरणाग्रम् ॥ ११ ॥

असितघन इवावनद्धवर्मा
प्रचुरमणिद्युतिभिर्महेन्द्रचापी ।
स्तनितघनधनुर्गुणप्रणादो
नयनपुटस्फुरदग्निभिस्तडित्वान् ॥ १२ ॥

विदधदभिनवं प्रतीपवर्षं
प्रतिमुहुरूर्ध्वमुखैः शिलीमुखौघैः ।
अपभयमभिषेणयांबभूव
प्रकटकटुप्रतिघः स रावणिस्तम् ॥ १३ ॥

अपि निशिततराः शराः सुरारे-
र्वपुषि हरेरचलस्थिरे पतन्तः ।
नयवति कुनया इवाधमस्य
क्षतफलताहितलाघवा निवृत्ताः ॥ १४ ॥

अधिरथमवपत्य तोरणाग्रा-
दपहृतबाणधिशाणचापदण्डः ।
करतलकुलिशेन स व्यदारी-
दपकृपमक्षकुमारमक्षतौजाः ॥ १५ ॥

अनुपदमुपलब्धरावणाज्ञः
प्रजवितया जितवायुना रथेन ।
वलयितपृथुचापसंहितेषुः
परिददृशे रणसीम्नि मेघनादः ॥ १६ ॥

वनतरुफलजग्धिलब्धजीव !
त्वमपि किमत्र विजृम्भसे वनौकः ! ।
अविरतकरदीकृतामरेन्द्रा-
नपि न शृणोषि कथं निशाचरेन्द्रान् ॥ १७ ॥

भृशमपकृतवानसीन्द्रशत्रौ
यदलमशोकवनीमिमामभाङ्क्षीः ।
स्पृशति न पवनोऽपि यां भयेन
ग्लपयति यां न पुनर्दिवाकरोऽपि ॥ १८ ॥

स्मर कपिकुलकीट ! चापलं स्वं
न खलु सहेत जगज्जयी दशास्यः ।
इह तु वयमपत्रपामहे यत्
कपिमपि संप्रहरेम संग्रहारे ॥ १९ ॥

अथ करचरणं नियम्य पाशै-
स्त्रिदशरिपोरुपदीकरिष्यसे त्वम् ।
हसरसतरलस्तनोत्तरीय-
श्लथनघनत्रपयोषिदीक्ष्यमाणः ॥ २०

परुषमिति वदन्तमभ्यमित्र-
स्तमिदमुवाच सहासमाञ्जनेयः ।
प्रहसनरसिकावरोधभाज-
स्तव पितुरस्ति पुरा ममाभिनेयम् ॥ २१ ॥

निशिचरवधनाटकेऽभिनेये
प्रथममहं प्रविशामि सूत्रधारः ।
नखशिखरविलुण्ठिताक्षवक्त्र-
स्फुट[illegible] क्षिपामि ॥ २२ ॥

शलभ इव विभावसावमुष्मिन्
मयि किमुपक्रमसे निशाटपाश! ।
स्थिरमतिरयमस्मि रामदूत-
स्त्वमिव शतं प्रहरन्तु मेघनादाः ॥ २३ ॥

अविदितरघुवीरबाणशक्ते-
रिदमथवोचितमेव गर्वितं ते ।
अनधिगतपयोधिभूम्नि भाव्यं
जलनिलयत्वमदेन पल्वलेऽपि ॥ २४ ॥

अथ तुमुलमभूत् तयोः समीकं
शरनखदन्ततलप्रहारघोरम् ।
भयकुतुकगतागतप्रवास-
प्रवणनभश्चरनिश्चलाक्षिदृष्टम् ॥ २५ ॥

अधिसमरमजय्यमाकलय्य
प्रतिभटभञ्जनमञ्जनातनूजम् ।
द्रुतममुचदमोघमिन्द्रजेता
कमलजदैवतमस्त्रमस्त्रवेदी ॥ २६ ॥

तदनु तदनुपेत्य तं बबन्ध
क्षणमिव निस्पृहमप्यवन्ध्यभावात् ।
स्वयमथ शिथिलं च सोऽपि विद्वान्
न खलु जहौ दशकन्धरं दिदृक्षुः ॥ २७ ॥

निशिचरनिकरेण कृष्यमाणः
प्रमदपरिस्फुरदिन्द्रजित्पुरोगः ।
सपदि स सचिवैरमुक्तपार्श्वं
दशमुखमासददुन्नतासनस्थम् ॥ २८ ॥

करतलचलचामराभिरुद्य-
त्कलरवकङ्कणमेखलाकुलाभिः ।
भयतरलविलोचनोत्पलाभिः
परिकलितं परिवारसुन्दरीभिः ॥ २९ ॥

प्रतिमुहुरभिमानशृङ्गभङ्ग-
प्रगुणितरोषविशेषपाटलानाम् ।
द्युतिभिरनिलसन्निभाभिरक्ष्णां
दिशि दिशि भृत्यवनानि दीपयन्तम् ॥ ३० ॥

अथ वलयितदीर्घबालहस्त-
प्रविहितचित्रमहासनोपविष्टे ।
धृतिमति पवनात्मजे सभाया-
मभिहितवानमितः स दत्तदृष्टिः ॥ ३१ ॥

हरिदहनपरेतराजरक्षो-
वरुणमरुद्धनदेन्दुशेखरेषु ।
कतममयमवाप्य रक्षितारं
मम पुरमाविशतीति पृच्छतैनम् ॥ ३२ ॥

अहह न विषहामहे महेन्द्र-
प्रमुखमखाशनषण्डदण्डधाराः ।
वयमयश इदं नवावतारं
जनितमनेन वनौकसां बुसेन ॥ ३३ ॥

बहुतृणमयमत्र नः कियान् स्यात्
प्रतिविधिरस्तु यदीय एष तस्मिन् ।
प्रशिशमयिषुरुद्धुरं हि धूमं
प्रशमयति प्रसभेन हव्यवाहम् ॥ ३४ ॥

इति वदति दशानने सगर्वे
सरभसमापततोऽथ यातुधानान् ।
अहमहमिकया विवक्षमाणा-
ननिलसुतः प्रतिषिध्य वाचमूचे ॥ ३५ ॥

अपसरत खला न वो वदामः
सति कुणपाशनराजि सम्मुखीने ।
प्रथमरविकराः पुरःस्थितेऽद्रौ
कथमिव सानुरुहः स्पृशन्ति वृक्षान् ॥ ३६ ॥

शृणु दशमुख ! तस्य किङ्करोऽहं
कनकमृगच्छलतोऽपवाहितस्य ।
वपुरपरमवाप्य यस्य दारान्
स्मरसि वनान्ननु चोरयिष्यसि त्वम् ॥ ३७ ॥

मृधभुवि खरदूषणत्रिमूर्धा-
नभिमुखमापततः समग्रसैन्यान् ।
यमसदनमनेष्ट यस्य बाणो
भुवनपतेरहमस्मि तस्य दूतः ॥ ३८ ॥

तव खलु भुजदण्डपण्डकण्डू-
भिदुरदुरन्तपराक्रमक्रमस्य ।
कपिकुलवृषभस्य शक्रसूनो-
र्दमयितुरस्मि चरः स्थिरोढकीर्त्तेः ॥ ३९ ॥

दिनकरतनयेन तस्य सख्या
निखिलवलीमुखलोकनायकेन ।
अयमहमनुचोदितो हनूमान्
कुणपभुजां पुरि मार्गणाय देव्याः ॥ ४० ॥

इदमभिहितमस्ति वाचिकं च
प्लवगवरेण भवन्तमन्तरेण ।
त्यज दशमुख ! कापथाध्वगत्वं
निजमखिलान्यगुणप्रणाशकारि ॥ ४१ ॥

द्रुहिणकुलमलङ्करोषि यत् त्वं
तपसितवानसि यच्च निश्चलात्मा ।
यदपि भुजभृतामसि त्वमाद्यो
गुणगणमेतमपार्थकं न कुर्याः ॥ ४२ ॥

विघटयति यशः श्रियं विहन्ति
प्रतिपदमापदमुच्चिनोति भूयः ।
बलवति पुरुषे कृतो निकारः
पवनभुजेव पतत्रिसार्वभौमे ॥ ४३ ॥

कृतमतिमददोषपोषणेन
प्रशममुपेहि जहीहि रामदारान् ।
वरमनभिमतार्थवज्रपाता-
दभिमतासिद्धिनिराकरिष्णुतेति ॥ ४४ ॥

अहमपि विवृणोमि वाचिकार्थं
यदि न विभोश्चरणौ समाश्रयेथाः ।
अशनिरिव वनानि तच्छराग्नि-
र्हुतमिव धक्ष्यति रक्षसां कुलानि ॥ ४५ ॥

अनुवदति विभीषणे तदुक्तीः
प्रवयसि माल्यवति प्रशंसतीमाः ।
प्रहसति मुहुरुच्चकैः प्रहस्ते
परुषमभाषत रोषणो दशास्यः ॥ ४६ ॥

किमयमभिदधाति कीशपाशो
मम पुरतोऽपि समग्रशक्तिभूम्नः ।
प्रणिधिसमयलङ्घिनं तदेनं
प्रहरत कद्रदमाशु यातुधानाः ॥ ४७ ॥

मनुजवटुरहो बलीमुखौघै-
रनुमिलितो यदि जेतुमीहते माम् ।
परिभवितुमलं सहान्धकारैः
कथमिव कीटमणिर्न भानुमन्तम् ॥ ४८ ॥

विभणिषति विभीषणः किमस्य
प्रणिधितया न भवेद् वधार्हतेति ।
भवतु विधिरलङ्घितस्मृतीनां
विसृजत पावकदग्धपुच्छमेनम् ॥ ४९ ॥

अयमनलशिखाविलुप्तपुच्छः
करुणतरस्वरसूचितापमानः ।
मनुजमनुजमप्यमुष्य गत्वा
नि[illegible]नक्षरं ब्रवीत् ॥ ५० ॥

अथ रजनिचरा घृतोपसिक्तैः
सिचयचयैरभिवेष्टिते हठेन ।
लघु पवनसुतस्य बालहस्ते
पवनसखं विनिवेशयांबभूवुः ॥ ५१ ॥

स च जनकसुतासमाधिशिष्टः
समजनि यद्यपि तत्र शीतवीर्यः ।
अरिपुरदहने तथापि सोष्मा
न खलु विधिर्यदनूदितातिगामी ॥ ५२ ॥

हरिरपि परिपुच्छयांबभूव
द्विषति मिषत्यपि तत्र राक्षसौघे ।
उपवनमणिहर्म्यहेमहट्ट-
प्रघणशतेषु च पुप्लुवे समन्तात् ॥ ५३ ॥

अपि कपिवृषभस्य बालजन्मा
सपदि स वृद्धतमो बभूव वह्निः ।
दृढतरमवलम्ब्य केतुदण्डा-
नचलदतोनु पतन् पतन् गृहेषु ॥ ५४ ॥

स्वयमखिलंसुरालयप्रदाही-
कुणपमदन् प्रणदंश्च पानभूमौ ।
गृहशरणमुपद्रवन् द्विजौघं
क्वचन स राक्षसधर्ममाललम्बे ॥ ५५ ॥

क्वचिदभिनवकामिनीजनानां
कचमवलम्ब्य करेण गाढरागः ।
विधुतमपि मुखं हठेन चुम्बन्
विटचरितं स विडम्बयांचकार ॥ ५६ ॥

अकृत स नवमंशुकं ध्वजाग्रे
किसलयजालमशोककाननेषु ।
मुखपटमरुणं करीन्द्रकुम्भे
युवतिकुचेषु च कुङ्कुमं शिखाभिः ॥ ५७ ॥

कनकमयगृहेषु तत्प्रभाभि-
निचुलितदीप्तिरपि प्रदीप्यमानः ।
उपरि परिसृतेन धूमभून्ना
गगनचरैः स किलानुमीयते स्म ॥ ५८ ॥

मुहुरपि विपुले पलाशनानां
निलयशते भ्रमणादिवाधितृष्णः ।
भृशमापिबदपः स वापिकाना-
मनुचरगन्धवहप्रदर्शितानाम् ॥ ५९ ॥

अनधिगतवधूपदाभिघाता
अपि किममी प्रसवानि दर्शयन्ति ।
ददुरुपवनपालिकाभ्य इत्थं
भ्रममनलस्य परिग्रहादशोकाः ॥ ६० ॥

त्रुटितनिपतितैरधः समन्ता-
दरुणमणिप्रकरैरभिन्नरूपाः ।
क्षणमथ विकृताश्च दीप्तिभङ्गा-
दनलकणाः क विडम्बना चिरा(युः?य) ॥ ६१ ॥

पुरि दशमुखबाहुपालितायां
न परमृते जनकेन्द्रजानिवासात् ।
न हि स समजनि प्रदेशलेशः
पवनसखेन न भस्मसात्कृतो यः ॥ ६२ ॥

अथ नभसि विमानसञ्चराणां
निजचरितस्तुतिशालिनां मुखेभ्यः ।
रघुपतिरमणीमनाग्निबाधां
मुहुरशृणोत् प्रजहर्ष चाञ्जनेयः ॥ ६३ ॥

स च पुनरपि तामुपेत्य नत्वा
तदुपहिताः शिरसाशिषः प्रगृह्णन् ।
रजनिचरवधूविलापदुःस्था-
महितपुरीमपहाय सम्प्रतस्थे ॥ ६४ ॥

अथ निजमहसानलस्य दीप्तिं
सपदि शमं प्रगमय्य वायुसूनुः ।
अलमलमकरोत् त्रिकूटशैलं
दिवसपतिर्भगवांश्च पूर्वशैलम् ॥ ६५ ॥

द्रुतमुदपततामुभावनन्तं
द्युतिनिकरेण परस्परोपमेयौ ।
जनयितुमनयोः प्रकर्षमेकः
कपिसदसामपरस्तु पङ्कजानाम् ॥ ६६ ॥

प्रतिलङ्घ्य सिन्धुमपनिद्रया निजां
कृतकृत्यतां प्रकटयन् मुखश्रिया ।
युवराजमङ्गदमुपेत्य सानुगं
हनुमाननूनमुदमभ्यवन्दत ॥ ६७ ॥

हर्षाविष्टैरागतदर्पैरुपसृत्तै-
रुद्धूताङ्गैरुत्कटहिक्कारवकण्ठैः ।
उद्भ्रान्ताक्षैरुत्प्लवमानैर्वलमानै-
र्वारं वारं स प्लवगौघैः परिरेभे ॥ ६८ ॥

सीतोदन्तं साधु निशम्य त्वरमाणै-
रुद्धावद्भिस्ताडितभेरीपणवाद्यैः ।
साहङ्कारैरुद्धतमुत्पुच्छयमानै-
रन्वीतस्तैरम्बुधितीरान्न्यवृतत् सः ॥ ६९ ॥

मध्येवर्त्म मत्तमयूरीरवरम्यं
संरुद्धार्कं सत्फलपुष्पैस्तरुसङ्घैः ।
उत्कूलापैः कूपतटाकैरुपपन्नं
मार्गश्रान्ताः स्फीतमरण्यं ददृशुस्ते ॥ ७० ॥

भुञ्जाना मधुकानने मधुरसस्यन्दीनि मन्देतरं
वल्लीवृक्षफलानि फुल्लकमलैः स्नाताः सरोवारिभिः ।
द्राक्षाशीधुरसोपयोगसुभृशक्षीबा धुताध्वक्लमा
रुन्धानं वनरक्षिणं दधिमुखं नाजीगणन् वानराः ॥ ७१ ॥

भीतो यावन्मातुलः सूर्यसूनो-
स्तस्याभ्याशं प्रत्यसावभ्यधावत् ।
तावत् तेऽपि प्राप्तवन्तो नदन्तः
क्षोणीभागं कम्पयन्तः समन्तात् ॥ ७२ ॥

हनुमानुपेत्य मनुवंशपुङ्गवं
तरसा ननाम कलितप्रदक्षिणः ।
अवलोकिता तव विभो! कुटुम्बिनी
दशकण्ठवेश्मनि मयेत्युदीरयन् ॥ ७३ ॥

जनकदुहितुश्चूडारत्नं तदर्पितमश्रुभिः
स्नपितममितोत्कण्ठः पूर्वं दृशा परिषस्वजे ।
तदनु सुदतीं जीवन्तीं तां वदन्तममुं मुहुः
सुदृढमुरसा वायोः पुत्रं मुदा भरताग्रजः ॥ ७४ ॥

निजकिरणतृणीकृतार्कभासं
मणिमुरसा परियोजयन्नुदारम् ।
चिरमवहदुदूढकौस्तुभायाः
प्रकृतितनोः श्रियमात्मनो महात्मा ॥ ७५ ॥

इति श्रीरामपाणिवादविरचिते राघवीये महाकाव्ये
चतुर्दशः सर्गः ॥

---

अथ पञ्चदशः सर्गः ।

उपलभ्य घनादिवाञ्जनेया-
न्नववृष्टेरिव सुभ्रुवाः प्रवृत्तिम् ।
तपतप्त इवाशु जीवलोको
विरहार्त्तोऽथ समाश्वसीन्नरेन्द्रः ॥ १ ॥

स तया नयनाभिरामकान्ति-
प्रसरोऽनुग्रहितः शिखामणिस्तम् ।
समचुक्षुभदन्तरीक्षितः स-
न्नुदितः पूर्ण इवेन्दुरम्बुराशिम् ॥ २ ॥

दलितेन्द्रमणित्विषोऽपि देव्या
वसुधापांसुभिरद्य धूम्रकान्तेः ।
अपि सान्ध्यतमःसमानभासः
कुशलं रत्न ! तवौकसः शिखायाः ॥ ३ ॥

इति तावदुदश्रुलोचनस्य
प्रसभं तस्य विलापवाक्यपङ्क्तेः ।
स्फुटमुद्गम एव भानुसूनो-
रभवत् कुण्डलना गिरां प्रपञ्चः ॥ ४ ॥

उदतिष्ठत शक्तिभिः समग्रः
खरवालिक्षपणाद् विशुद्धपार्ष्णिः ।
विजिगीषुरधिष्ठितः स नीतिं
विमतानां चिरवाञ्छितेऽभियोगे ॥ ५ ॥

तदनु प्रतिमुक्तसिंहनादः
कुमुदादिप्रविजृम्भणैकहेतुम् ।
उदयाद्रिरिवोडुराजमंसे
बिभरामास तमुन्नतो हनूमान् ॥ ६ ॥

स तमग्रजमन्वियाय धन्वी
कवची बाणधिमांसलांसपृष्ठः ।
युवराजधृतोऽथ लक्ष्मणोऽपि
स्थिरमुत्साहमिवाश्रितः प्रतापः ॥ ७ ॥

नलजाम्बवदादिसैन्यपालं
बलमग्रेसरनीलमुग्रवीर्यम् ।
रघुनाथसनाथमाशु कर्षन्
हरितं प्रास्थित दाक्षिणां हरीन्द्रः ॥ ८ ॥

पटहध्वनिरध्वनि प्रवृद्धः
परिपीतप्रतिमोचितोऽद्रिरन्ध्रैः ।
परितो हरितः समुत्ससर्प
प्रियमाख्यातुमिवाशु तत्पतिभ्यः ॥ ९ ॥

चरणाहतिकम्पितावनीकै-
र्धृतवैरैररिसंहतावनीकैः ।
अवलिप्ततया गतावनेकै-
रविरुग्णैस्तरुभिः स्थितं वने कैः ॥ १० ॥

उदडीयत पक्षिभिः समन्ता-
दगमेभ्यो हरियूथपातितेभ्यः ।
न च भीतिरमोचि तैरमुष्मा-
दगमेभ्योऽपि समुन्नतं श्रयद्भिः ॥ ११ ॥

शिखराणि न तानि ते न वृक्षा
न च रन्ध्राण्यपि तानि नापगास्ताः ।
अधिविन्ध्यमवन्ध्यविक्रमैस्तैः
कपिभिर्व्याप्यत यत्र न प्रयाणे ॥ १२ ॥

परिपाटिततालनक्तमालां
परितो मर्दितनिष्पतत्तमालाम् ।
लुलितेभमदाम्बुसौरभैला-
मभजन्त प्लवगाः पयोधिवेलाम् ॥ १३ ॥

कुमुदेन विलोकने पयोधे-
रुदहर्षि प्रविधूतकेसरेण ।
उचितं तदवैमि यत् सुधांशो-
र्जनिकर्तुः प्रकृतिः स हर्षहेतुः ॥ १४ ॥

विनतो विनतो बभूव भक्त्या
पनसश्च स्फुटकण्टकाखिलाङ्गः ।
विविदोऽपि विवेद दुस्तरं तं
व्यपदेशोचितचेष्टिता बभुस्ते ॥ १५ ॥

अपरेऽम्बुधयो जवादवाञ्चं
किममी संप्रविशन्ति वारिराशिम् ।
इति सन्दिदिहुर्विसृत्वरीं तां
हरिसेनामवलोक्य खेचरौघाः ॥ १६ ॥

अथ दाशरथिर्हनूमदंसा-
दवतीर्णस्तटमुन्नतं पयोधेः ।
अमरैरभिवन्दितोऽम्बरान्ता-
दपराद्रेः शिखरं च भानुमाली ॥ १७ ॥

रचिते हरिराजलक्ष्मणाभ्या-
मुपविष्टं तमथ प्रवालतल्पे ।
तटचन्दनपल्लवोपमर्दी
दिवसापायसमीरणः सिषेवे ॥ १८ ॥

दयिताधरशोणिमानुकल्पां
नितरामादरवानुपास्त सन्ध्याम् ।
स तदङ्गकदेश्यसौकुमार्ये
सरसे पल्लवसंस्तरे च शिश्ये ॥ १९ ॥

उदियाय तदाननानुवादी
तदुदारस्मितकल्पकौमुदीकः ।
तदुदीक्षणचातुरीधुरीण-
स्फुरदेणार्भकलाञ्छनः शशाङ्कः ॥ २० ॥

हरिचन्दनशीतलैर्मयूखै-
रनुलिप्तन्नपि काममङ्गमङ्गम् ।
अनुभावयति स्म तेन चन्द्रो
विरहक्लान्तधिया विषाग्निदाहम् ॥ २१ ॥

उदकूलयदुच्चकैर्गभीरं
सरितां वल्लभमुल्ललत्तरङ्गम् ।
स विदेहसुतावियोगभाजो
मनुवंशाधिपतेर्मनोभवं च ॥ २२ ॥

अथ लक्ष्मणमश्रुवर्षुकाभ्यां
नयनाभ्यामवलोक्य स व्यलापीत् ।
ननु वत्स ! तव प्रजावती सा
कथमद्यापि न वेद वेदनां मे ॥ २३ ॥

यदसौ वलमानभृङ्गमाला-
विलसन्मुग्धसरोरुहाभिरामम् ।
वदनं निजमुल्लसत्कटाक्षं
न नयत्यक्षिपथं ममाधुनापि ॥ २४ ॥

अथवैष सुधांशुरेव वक्त्रं
मदिराक्ष्याः क्रियतेऽक्षिगोचरो मे ।
इयमस्य बिभर्ति विभ्रवासो-
चितलम्बालकतां कलङ्करेखा ॥ २५ ॥

शिशिरांशुरितीममुष्णभास्त्वा-
दयथार्थं कथमामनन्ति सन्तः ।
जनपालमथो जनार्दनं ये
ब्रुवते हन्त किमस्ति दुर्वचं तैः ॥ २६ ॥

उदराद् बहिरुज्जिहानमेनं
कलयन्नेष यथाब्धिर्ऋद्धिमेति ।
समवैमि यथायमौर्ववह्निं
मनुते शत्रुममुं चिरान्निरस्तम् ॥ २७ ॥

इह वज्रमयेन राघवेणा-
प्यमुना दुष्प्रसहप्रतापमेनम् ।
विषहेत कथं विदेहपुत्री
नवमन्दारलतेव दाववह्निम् ॥ २८ ॥

अयि जानकि ! जानतापि दुःस्थां
त्वदवस्थाममुनातिकर्कशेन ।
न मया परिमोचितासि कृच्छ्रा-
दिति मे मानसमावृणोति लज्जा ॥ २९ ॥

किमहं करवाणि कीरवाणि !
ग्रसति स्थैर्यविधुं प्रमोहराहुः ।
यदतो वयमन्धकारमग्ना
हरितोऽमूः परितो विलोकयामः ॥ ३० ॥

*हृदयं च मम प्रमूढभावा-
दितिकर्तव्यतया न निश्चिनोति ।
विरहान्धतयावृतं क्व चेतः
क्व च कृत्यं प्रतिकर्तुरप्रमादः (?) ॥ ३१ ॥

इति विप्रलपन्तमव्यवस्थं
प्रकृतिस्थं विदधे द्वयं तदानीम् ।
निजमस्थिरविक्रियं च धैर्यं
श्रुतधौतं वचनं च लक्ष्मणस्य ॥ ३२ ॥

अथ तावदवाचि सिन्धुपारे
नगरीमध्युषितेन तेन लङ्काम् ।
उपसेदुषि रक्षसां समाजे
चिरमारभ्यत रावणेन मन्त्रः ॥ ३३ ॥

समयोचितमेव सावधानाः
शृणुतेदं परिषद्बला वचो नः ।
बहुभिर्यदवेक्ष्यते तदेको
नहि वाचस्पतिरप्यवैति कृत्यम् ॥ ३४ ॥

इह भूतभवद्भविष्यदर्थान्
विषयीकृत्य विकल्पयन्ति मन्त्रान् ।
प्रथमे विमुखा श्लथा द्वितीये
वयमत्राभिमुखाः परं तृतीये ॥ ३५ ॥

विनिपात उपेक्षितः खरादे-
र्निपुणोऽप्यत्र निरर्थको विचारः ।
[1]अभिषेणयति द्विषन् यदस्मा-
नधुना तत्र तु सोऽस्तु वा नवास्तु ॥ ३६ ॥

१. 'क' क पाठः



* इदं पद्यं व्याख्याने न दृश्यते ।

इत ऊर्ध्वतमानमित्रजैत्रा-
नधिकं नः शिवतातयेऽनुकूलान् ।
*निपुणं प्रविचार्य कार्यमार्या !
ननु मन्त्रानधुना समारभध्वम् ॥ ३७ ॥

इति चञ्चलचन्द्रहासपाणे-
र्गिरमाकर्ण्य निशाचरेश्वरस्य ।
भुजविक्रमधिक्कृतामरेन्द्राः
प्रथमं प्रोचुरिदं प्रहस्तमुख्याः ॥ ३८ ॥

इह मन्त्रमतन्त्रमाहुरार्या
बलवीर्यैरवरो हि यत्र शत्रुः ।
मनुजः स तथाहि नो विजेयः
स च ही ! हास्यमिदं प्लवङ्गबन्धुः ॥ ३९ ॥

मुखमारुतमात्रमीरणीयं
यदि निर्वाप्यतयेष्यते प्रदीपः ।
मुदिरोदरवारिवृष्टिरिष्टा
यदि धक्ष्यन्नभियाति कक्षवह्निः ॥ ४० ॥

पिनषाम किमिक्षुपेषमेते
मनुजौ तावनुशाधि राक्षसेन्द्र ! ।
अथवा शशपोतजक्षमेता-
वपि जक्षाम किमक्षमं विभो ! नः ॥ ४१ ॥

स्मरसि त्रिदशान् नियम्य पाशै-
रुपनेष्याम इहैव ते पुरस्तात् ।
मुहुरभ्रमुवल्लभस्य कुम्भे
प्रहरिष्याम इमे चपेटिकाभिः ॥ ४२ ॥

अतिदुष्करमन्यदप्युदग्रं
कृतवन्तो मनुजात् कथं बिभीमः ।
करिकुम्भमथो वनेचराणां
विशिखाः किं विमुखाः कुरङ्गभङ्गात् ॥ ४३ ॥

---

* 'अतिगूढतया फलानुमेयान् ननु' इति व्याख्यासम्मतः पाठः.

इति दृप्ततया विकत्थमानान्
विनिवार्य क्षणदाचरान् करेण ।
निरवग्रहमग्रजं प्रणम्य
स्मयमानोऽथ विभीषणो बभाषे ॥ ४४ ॥

अधिकृत्य निजं निजं विभुत्वं
विवदन्तामसुके मुधाप्रगल्भाः ।
न च केनचिदप्युदाहृतं त-
द्विपदः स्वाम्यपवाहितोऽस्ति येन ॥ ४५ ॥

अत एव तवापि राक्षसेन्द्र !
च्यवते धर्म्यपथान्मतिः क्रियासु ।
अविचारितसुन्दरे यदेषां
वचने तिष्ठ स एव सन्दिहानः ॥ ४६ ॥

स्वगुणैर्भुवनप्रकाशकोऽपि
क्रमवृद्ध्या परिपूर्णतां गतोऽपि ।
सुजनो हि भवेदनार्यसङ्गा-
न्मृगसङ्गादिव चन्द्रमाः कलङ्की ॥ ४७ ॥

बलवानसि सत्यमत्यमर्षा
दपरेषां विविनक्षि नो विशेषान् ।
अबलेष्विव कोपबीजमुप्तं
भवता यत् प्रबलेष्वपि प्रमादात् ॥ ४८ ॥

हृतवानसि राघवस्य दारा-
ञ्छलतो वा बलतोऽथवा न जाने ।
परिकुप्यति सर्वथा स तुभ्यं
परिभूतिं विषहेत को बलीयान् ॥ ४९ ॥

विदितोद्धुरदोर्बलस्त्वयापि
प्लवगानां पतिरुद्धतः स वाली ।
स्वयमेकशरस्य यस्य लक्षं
समभूत् तं विजिगीषसे मुधैव ॥ ५० ॥

तदनु प्रतिबुद्ध्य जृम्भमाणः
मलयाम्भोदगभीरसिंहनादः ।
विदितार्थतयाग्रजं समेत्य
प्रणमन्नेवमुवाच कुम्भकर्णः ॥ ५१ ॥

त्रिजगद्विजयी भुजप्रतापो
धनदेनापि पणायिता विभूतिः ।
उभयं तदपार्थकं विधत्ते
परदारोत्सुकता तवाग्रजन्मन् ! ॥ ५२ ॥

अचिरद्युतिचञ्चला हि लक्ष्मी-
ररिषड्वर्गमवापिता रथं सा ।
अपहाय निजाश्रयं प्रधावेत्
त्वमतस्तामरथां विधेहि राजन् ! ॥ ५३ ॥

स भवत्परिभूतलेखलोक-
स्तुतिसामर्थ्यसमर्थितात्मलाभः ।
सहते न निसर्गतोऽपि रामः
शुभकर्मक्षतिकर्मकर्मठान् नः ॥ ५४ ॥

इह षट्सु गुणेषु चिन्त्यमाने-
ष्वधुना नः प्रतिभाति सन्धिरेव ।
अथवा मतिमानयं ब्रवीतु
श्रुतदृष्टं मतमावयोः कनीयान् ॥ ५५ ॥

परिभुक्तविमुक्तसर्वभोगा
भवदर्थे वयमुज्जहाम देहम् ।
तदभग्नसमीहितेन भाव्यं
भवतेति ब्रुवताधुना निदद्रे ॥ ५६ ॥

अवदच्च विभीषणो दशास्यं
यदशास्योऽसि ततो बिभेमि वक्तुम् ।
अथवा विमतोऽपि पथ्यवादी
सुहृदोऽपथ्यगिरो वरं प्रभूणाम् ॥ ५७ ॥

यदवोचदनन्तरोऽग्रजो मे
  रिपुणा सन्धिरिहोचितस्तवेति ।
हितमार्य ! तदेव केवलं नो
  न विनश्येम यतः सबन्धुभृत्याः ॥ ५८ ॥

सुघटो न हि विग्रहो यदग्रे-
  सरसुग्रीवपरिग्रहादुदग्रम् ।
हरिचक्रमसह्यविक्रमं तत्
  प्रतिरोद्धुं कतमः क्षमेत राजन् ! ॥ ५९ ॥

परमन्यतमोऽत्र जन्यशूरो
  जलधिं गोष्पदवद् विलङ्घमानः ।
इह यद्यदपाकरोद्धनूमा-
  नथवा शान्तमतः परं न वक्ष्ये ॥ ६० ॥

अथ शक्रजिदुक्तवानलं भो !
  विमतोत्कर्षविभावनस्तवेन ।
मयि जीवति हन्त कार्मुकज्या-
  दृढसन्दानितवासवे कुतो भीः ॥ ६१ ॥

प्रलपत्वतिभीलुकः पितृव्यो
  बधिरः स्यास्त्वमदोवचस्सु राजन् ! ।
इदमेष न वेद शस्त्रसाध्यो
  यदरिध्वंसविधिर्न शास्त्रसाध्यः ॥ ६२ ॥

इति वादिनमप्रमाणयंस्तं
  पुनरप्यग्रजमब्रवीत् कनीयान् ।
खरदूषणकण्ठशोणिताक्ताः
  स्मरणीया ननु राघवस्य बाणाः ॥ ६३ ॥

इह शक्रजिदादयो विजेतुं
  विभताज्ञाग्रति वीरमानिनो ये ।
पुरतः स्फुरिते रघुप्रवीरे
  न हि ते सन्ति रवाविवान्धकाराः ॥ ६४ ॥

तदनेन हरीश्वरैः सनाथै-
रयमब्धिः प्रतरिष्यते न यावत् ।
प्रतिपादय तावदावनेयी-
मवनीशाय विनीतिभागमुष्मै ॥ ६५ ॥

पुनते हि जगन्ति यत्परागा
विधिरावर्तयते च यत्परा गाः ।
चरणौ भुवनावनोद्यतस्य
भज तौ दर्शितभावनोऽद्य तस्य ॥ ६६ ॥

विकटभ्रुकुटीविटङ्कभीमं
दधदारक्ततराक्षमाननौघम् ।
प्रहसन् कृतहस्ततालमुच्चै-
रवदत् क्रोधविघूर्णितो दशास्यः ॥ ६६ ॥

प्रतिपक्षनिबद्धपक्षपातै-
र्निभृतद्वेषविभावितानुरागैः ।
स्फुटनाटिततोषसस्मितास्यैः
स्वजनैर्वञ्च्यत एव साधुलोकः ॥ ६८ ॥

मनुजाधममेवमस्मदग्रे
बहुशः स्तौषि मृषार्थकैर्वचोभिः ।
क्षिपसि स्वजनं च धिग् धिगेतत्
पुरतस्त्वां न सहे विपक्षगृह्यम् ॥ ६९ ॥

प्लवगप्रवणः स मर्त्यपाश-
स्तव मत्तो गुणवत्तरो मतश्चेत् ।
तदमुं द्रुतमाश्रयस्व काचं
कनकाच्छ्लाघ्यतरं विदन्ति मूढाः ॥ ७० ॥

कपटस्मितकश्मलं मुखं ते
न खलु द्रक्ष्यति रक्षसामधीशः ।
इति स द्रुतवक्रितास्यचक्रो
विनिवृत्त्य स्थितवानसंमुखीनः ॥ ७१ ॥

हितमार्य ! निवेदितं मयेदं
भवता प्रत्युत विप्रियं गृहीतम् ।
सहसे न सहासिकामितस्त्वं
यदि मे किं करवाणि साधयामि ॥ ७२ ॥

इति सोऽपि विभीषणः प्रणम्य
द्रुतमुत्थाय च निश्चितात्मकृत्यः ।
सहितो रजनीचरैश्चतुर्भि-
र्धृतिमानम्बरवर्त्मना प्रतस्थे ॥ ७३ ॥

तरसा परिलङ्घ्य वारिराशिं
शिबिराणामुपरिस्थितेन तेन ।
अयमस्मि विभीषणः प्रपन्नः
शरणं राघवमित्यभाणि वाणी ॥ ७४ ॥

अथ तामुपकर्ण्य तत्प्रतीष्टे
विचिकित्सातरलो रघूत्तमेन ।
शरणैषिपरिग्रहैकतानै-
र्वचनैः प्रत्ययिकीकृतो हरीन्द्रः ॥ ७५ ॥

प्लवगानुगतेन तेन हस्ते
सुगृहीतः सुगुणेन दर्शिताध्वा ।
उपगम्य शनैर्विनीतवेषो
रघुवीरं स विभीषणो ववन्दे ॥ ७६ ॥

हितवादिनमेव रावणो मां
स निरास्थन्निजमन्दिरान्निरास्थः ।
अथवा क्व विवेकिता क्व मोहो
रघुनाथैष जनस्त्वदेकनाथः ॥ ७७ ॥

इति वादिनमब्रवीद् विभुस्तं
त्यज वैक्लव्यमये पुलस्त्यनप्तः ! ।
असपत्नतयोज्ज्वलं कुलं वो
भविता भव्यमते ! भवत्सनाथम् ॥ ७८ ॥

युगान्तप्रक्षुभ्यज्जलधिकुलकल्लोलनिनद-
प्रचण्डज्याघोषे धनुषि निहितोऽयं मम शरः ।
दशग्रीवग्रीवापटलचटुलासृग्भरझरे
कृतस्नानक्रीडो दिशतु तव साम्राज्यपदवीम् ॥ ७९ ॥

इति तमभिषिषेच भ्रातृहस्तोपनीतैः
सुरगजमदधारागन्धिभिः सिन्धुतोयैः ।
घन इव पवमानप्रापितैरद्रिराजं
मरतकमणिभङ्गश्यामलो रामदेवः ॥ ८० ॥

इति श्रीरामपाणिवादविरचिते राघवीये महाकाव्ये
पञ्चदशः सर्गः ॥

---

अथ षोडशः सर्गः ।

अथारुणैः किरणनखैर्विसारिभि-
र्विदारयंस्तिमिरमतङ्गजव्रजम् ।
उपेयिवानुदयगिरेरधित्यकां
प्रतापवानहिममयूखकेसरी ॥ १ ॥

विवस्वतः स्फुरदरविन्दपाटला
मरीचयस्तरळतरङ्गभङ्गुराः ।
पयोनिधेः पयसि तदानुबिम्बना-
दविन्धनज्वलनशिखाश्रियं दधुः ॥ २ ॥

दिगङ्गनाविपुलपयोधरान्तरे-
ष्वधुस्तदा घुसृणपरागविभ्रमम् ।
नवातपा वनकरिकुम्भमण्डले-
ष्वकुर्वत क्षणमुखपट्टबन्धनम् ॥

वियन्नदीविकचसुवर्णपङ्कजं
पुरोहरिद्गुरुकुरुविन्दकुण्डलम् ।

परिस्फुरत्प्रचुरमरीचिमण्डलं
बभौतमामभिवियदर्कमण्डलम् ॥ ४ ॥

अथाब्रवीद् दशरथनन्दनः सखे!
विभीषण! द्रुतमनुचिन्त्यतामिदम्।
सुदुस्तरोऽम्बुधिरपि येन लङ्घ्यते
सुदुर्जयो रिपुरपि येन जीयते ॥ ५ ॥

विभीषणोऽप्यभिहितवान् विचिन्त्यते
तदेव यत् प्रथममुदीरितं त्वया
बलीयसा ध्रुवममुनैव सिध्यता
प्रसाधितं परमुपसर्जनं हि तत् ॥ ६ ॥

इहाप्ययं नय उपपद्यते यतः
समाश्रितो भवतु महानपांनिधिः।
अयं कथं भुवनहितार्थमर्थिने
भवादृशे नृवर! न मार्गमर्पयेत् ॥ ७ ॥

अचीखनन्ननु सगरोऽयमम्भसा-
मपूपुरत् सुरसरितो भगीरथः।
तवापि हि प्रणयममुं स सागरः
कथं नु मा मनुकुलनाथ! जीगणत् ॥ ८ ॥

इति श्रुते वचसि पुलस्त्यजन्मनः
प्रसेदिवान् नियमशुची रघूत्तमः।
कराम्बुजे जलधिमनु प्रसारय-
न्नशेत स प्रतिनवदर्भसंस्तरे ॥ ९ ॥

अथाशृणोत् प्रणिधिमुखाद् दशाननो
विभीषणं रघुपतिनाभिषेचितम्।
तदीरिते बहुमतिमृच्छतामुना
स्रुतिं पुनः सलिलनिधिं च याचितम् ॥ १० ॥

रिपोर्बलं भृशमुपजापजर्जरं
करोम्यहं द्रुतमिति निश्चितात्मना ।
प्रचोदितः शुक इति तेन राक्षसो
दिवि स्थितो वचनमवोचदुच्चकैः ॥ ११ ॥

प्लवङ्गमप्रवर ! सखे ! मुधा भवान्
प्रयस्यति स्वयमपि मर्त्ययोः कृते ।
अकिञ्चनौ मुनिजनवृत्तिमास्थिता-
वमू किमु प्रतिवितरिष्यतस्तव ॥ १२ ॥

न चैष नः प्रियमधिकृत्य बालिनं
न्यबर्हयत् प्रभुरिति शङ्क्यमेव ते ।
दशाननप्रियसुहृदित्यसौ परं
निबर्हितो निजहितकारिणाऽमुना ॥ १३ ॥

किमङ्गद ! त्वमपि पितृद्रुहः कृते
पितुः प्रिये सुहृदि करोषि विप्रियम् ।
पितृव्यतोऽप्यति हि विमुग्धधीर्भवा-
नहो महत् कपिकुलमेतदाकुलम् ॥ १४ ॥

वने वने फलदलवाहिनो द्रुमा
न सन्ति किं मधुरजलाश्च निम्नगाः ।
मनुष्यतः कतममिवार्थमीप्सवो
वनौकसो निशिचरवध्यतां गताः ॥ १५ ॥

प्रभोर्गिरामनुवदमानमुत्प्लुताः
शुकं यथा निजगृहुरम्बराच्छुकम् ।
नियम्य च क्षितिपतिपुत्रयोः पुरो
बलादमुं विनिदधिरे वलीमुखाः ॥ १६ ॥

स दूत इत्यभयददेन मोचितो
दयालुना रघुतनयेन राक्षसः ।
हरीश्वराद् दशवदनाय वाचिकं
प्रतीष्टवानपि च पुरं प्रविष्टवान् ॥ १७ ॥

अथान्तरस्थितगुरुसत्त्वदुर्ग्रहो
महोन्नतिर्विपुलगभीरिमान्वितः ।
यथा यथा क्षुभितमधत्त वारिधि-
स्तथा तथा नृपतिसुतोऽपि तत्समः ॥ १८ ॥

महोर्मिभिर्विमथिततीरदारुणा
समुद्धतैर्ध्वनिभिरतीव दारुणा ।
तटेशये क्रमविततिं विभाविता
सरस्वता विकृतिरथो विभाविता ॥ १९ ॥

दिनत्रये विरतिमुपेयुषि क्रमा-
दमुञ्चति स्थिरमपि धैर्यमम्बुधौ ।
विजृम्भितप्रतिघपिशङ्गितां दृशं
समादधद् धनुषि समुत्थितो विभुः ॥ २० ॥

धनुर्धनुः सहज! यदेष सागरः
कृतघ्नतामजहदहो विजृम्भते ।
धिगर्थिनं गणयति नाधुनापि मां
कुतोऽथवा विनयगुणो जलात्मनाम् ॥ २१ ॥

कृशानुभिर्विशिखमुखादुदित्वरै-
स्तदेष भोस्तृणमिव शोपयाम्यमुम् ।
अदःश्रितं हृदयमिवास्य निष्ठुरं
परिस्फुटं स्फुटतुतरां मणीकुलम् ॥ २२ ॥

परित्रुटत्कमठकठोरकर्पर-
प्रसृत्वरस्फुरदनलोपसञ्चितैः ।
समन्ततः सितभसितैस्त्रिदीगसा
तरन्त्वमुं प्लवगभटाः स्थलाध्वना ॥ २३ ॥

इति ब्रुवन् धनुरनुजादुपाददत्
स सन्दधे शितमुखमत्र सायकम्
मधूपितः प्रथममथो समुज्ज्वलन्
धगिद्धगित्यवबुधदतो महानलः ॥ २४ ॥

विनिष्पतन्नधिजलमुज्ज्वलन्नलं
समुच्छ्रितैरलघुतमैः शिखाशतैः ।
स खेचरप्रचुरविमानचुम्बिभि-
स्तमम्बुधिं द्रुतमभितः समानशे ॥ २५ ॥

भ्रमत्तिमि ग्लपितपतत्तिमिङ्गिलं
चलत्करि प्रलुठदतुच्छकच्छपम् ।
त्रुटत्फणामणिगणखिन्नपन्नगं
तदम्बु तच्छकलितकम्बु सम्बभौ ॥ २६ ॥

वरं हि नो बलरिपुकृत्तपक्षता
न चानलग्लपितसमस्तगात्रता ।
इति ज्वलज्ज्वलनकरम्बितोदरा-
न्महाद्रयः स्फुटमुदमाङ्क्षुरम्बुधेः ॥ २७ ॥

समुच्चलद्बहलतरङ्गरोहिभिः
शिखाचयैः सपदि हिरण्यरेतसः ।
विलापितैर्नभसि हिरण्यवृष्टयो
निपातिताः कनकविमानमण्डलैः ॥ २८ ॥

तडित्लतामपलपता निजार्चिषा
निरुन्धता स्तनितमपि स्वभांकृतैः ।
निरस्यता रुचमपि धूम्ययाग्निना
तिरस्कृता वियति विलम्बिनोऽम्बुदाः ॥ २९ ॥

अथोऽम्बुधेर्मणिभवनं प्रचेतसो
महोष्मभिर्ग्लपितविशीर्णगोपुरम् ।
शिखाभुजप्रसभविमृष्टयौवत-
स्तनांशुकं भयचकितं चकार सः ॥ ३० ॥

अथोल्मुकज्वलनकणैरनुद्रुतः
स्खलद्गतिः प्रचलितमौलिमण्डनः ।
ससम्भ्रमं सलिलचयात् समुज्जहे
सरित्पतिः शिरसि निवेशिताञ्जलिः ॥ ३१ ॥

प्रसीद मे रघुवर ! संहराशुगं
क्षमस्व मे निकृतिमबोधहेतुकाम् ।
इति ब्रुवन् मनुकुलशुक्तिमौक्तिकं
समेत्य तं सपदि मुहुर्ननाम सः ॥ ३२ ॥

उवाच च प्रणमनदीर्घसूत्रता-
विधायिनो भवतु ममापराधिता ।
मयि क्षते क्वनु भवता शयिष्यते
युगावधाविदमपि विस्मृतं कथम् ॥ ३३ ॥

प्रसेदिवांस्तदनु विभुर्महात्मसु
प्रणन्तृतैव हि परमागसां क्षतिः ।
तदीरिते क्वचन मरावमुञ्चत
ज्वलन्मुखं विशिखमवन्ध्यसन्धिकम् ॥ ३४ ॥

अथावदत् पुनरपि वाहिनीपतिः
पतिव्रताककुदमनुग्रहीष्यतः ।
सुरद्रुहं सपदि हनिष्यतश्च ते
कथं ह्ययं व्रजतु जनोऽन्तरायताम् ॥ ३५ ॥

निबध्यतां प्लवगकुलेन हारितै-
र्महीधरैर्मम खलु सेतुरम्भसि ।
अयं नलस्त्वनिमिषशिल्पिनः सुतः
प्रगल्भते परमिह तस्य बन्धने ॥ ३७ ॥

अनेन नः पयसि निवेशितान् धरा-
नुरःस्थले वयमपि धारयामहे ।
जगद्भृतं ननु बिभृमो भवन्तम-
प्यमी वयं किमुत ततोऽवरान् परान् ॥ ३७ ॥

इहान्तरे मलयसुवेलशैलयोः
पुरं रिपोरियमुपतिष्ठते सृतिः ।
द्विधा कृतः सलिलचयो यथाधुना
रवेरिव प्रथमरुचा तमोभरः ॥ ३८ ॥

इतीरिणा हरिकुलहर्षकारिणा
तिरोदधे सपदि ततः प्रचेतसा ।
वरप्रदा वरयितुरग्रतश्चिरं
नहि स्फुटं प्रतिनिवसन्ति देवताः ॥ ३९ ॥

अथाज्ञया रघुतनयस्य चोदिताः
प्लवङ्गमा दिशि दिशि भानुसूनुना ।
शिरःशतैर्ग्रहगणमार्गरोधिनो
महीधरानहृषत पादपांश्च ते ॥ ४० ॥

महीभृतो जवपवमानवेल्लित-
स्वनिर्झरप्रसृमरशीकरोर्मिभिः ।
कृतज्ञतां दधत इवात्मवाहिनां
वनौकसां शममनयन् परिश्रमम् ॥ ४१ ॥

गुहाशयद्विपरिपुकण्ठगर्जित-
प्रतिध्वनत्प्लवगभुजावतारितम् ।
अदक्षिणस्वभुजतलेन दक्षिणः
प्रतीष्टवानचलकदम्बमङ्गदः ॥ ४२ ॥

कृताञ्जलिर्मुहुरथ विश्वकर्मणे
कृतात्मने दशरथनन्दनाय च ।
महीधरैरघटत सेतुकर्मणि
प्रथीयसि स्थिरमतिरम्बुधौ नलः ॥ ४३ ॥

निचिक्षिपे कुहरनिगीर्णमोचितै-
र्निरन्तरप्रकटितबुद्बुदेऽम्बुभिः ।
विचित्रिते विगलितधातुकर्दमै-
स्ततोऽमुना पयसि शिलोच्चयोच्चयः ॥ ४४ ॥

नगाहतिद्विगुणितवेगदुर्दमै-
रवाङ्मुखैरपि निनदैः सवाङ्मुखैः ।
चरैरिव स्वनियममभिन्नोर्मिभि-
र्निवेदितो नियतमनेन रावणः ॥ ४५ ॥

तरङ्गिणीविपुलपथेन वारिधे-
रतीव हि क्षुभिततया प्रतीपगैः ।
प्रपूरिताः सलिलभरैस्तरस्विभिः
समुद्धृतक्षितिधरमूलकन्दराः ॥ ४६ ॥

उदग्रयोरवनिभृतोर्यदन्तरे
निचख्निवानचलमधोमुखं नलः ।
अयं क्रमो निबिडनिबद्धसंहिता-
गुणाढ्यतामतनुत सेतुपद्धतेः ॥ ४७ ॥

अपांनिधाविति शतयोजनान्तरे
निवेशिता जलधरनीलभासि सा ।
बभौतमामविरतचङ्क्रमोत्थिता
यथाम्बरे रविरथचक्रपद्धतिः ॥ ४८ ॥

स्मृतावपि त्रिजगति पुण्यहेतवे
निशाचरक्षयकरधूमकेतवे ।
परिस्फुरत्कनकविचित्रधातवे
सुरा नतिं व्यधिषत रामसेतवे ॥ ४९ ॥

अथामुना हरिकुलहर्षनिस्वन-
प्रतिस्वनत्कुलगिरिकुञ्जकुञ्जरे ।
शुभे क्षणे जयकरभूरिलक्षणे
प्रयातवानरिविजयाय राघवः ॥ ५० ॥

कराश्रितभ्रमितगदो विभीषणः
पुरस्सरः सरणिमुपादिशत् प्रभोः ।
सहोदरः सवितृसुतश्च पार्श्वयो-
र्विचेरतुर्विपुलमुदावुदायुधौ ॥ ५१ ॥

हनूमदङ्गदनलनीलजाम्बव-
त्सुषेणकेसरिशरभादियूथपम् ।
अधस्तनं कतिपययैव सङ्ख्यया
परार्धतः प्लवगबलं समन्ततः ॥ ५२ ॥

करोद्धृतक्षितिधरपादपायुधं
    मदोद्धतप्रतिभयनादमेदुरम् ।
समुच्छ्रितैरनलपिशङ्गलोचनै-
    स्तदानघे दिवमपि भीषणैर्मुखैः ॥ ५३ ॥

क्रमादथो पृथुतरसेतुवर्त्मना
    विलङ्घयञ्जलधिमलङ्घ्यविक्रमः ।
अलङ्कृतं विपुलबलः स लङ्कया
    त्रिकूटपर्वतमधिरूढवान् विभुः ॥ ५४ ॥

तदग्रतः कृतपृतनानिवेशने
    हरीश्वरे बलवति नीलसेविते ।
सहोदरप्रणिहितचापसायके
    रघूद्वहे किसलयतल्पमास्थिते ॥ ५५ ॥

निमज्जति त्रिभुवनदीपरोचिषि
    प्रभाकरे चरमपयोधिवारिणि ।
तदुत्थितैरिव नवधूमभण्डलै-
    स्तिरोहिते तिमिरचयैश्च दिङ्मुखे ॥ ५६ ॥

निशाचरेष्वयमिह दण्डधारको
    रघूत्तमो वयमपि यन्निशाचराः ।
तदेष नः क्वचिदपि मा स्म पश्यदि-
    त्यतो भिया नियतमनुद्गते विधौ ॥ ५७ ॥

मणिस्थलस्खलितपदाभिसारिका-
    विघट्टनप्रचलतमालवीथिके ।
सुगन्धितापरिगतधूपनिर्गम-
    प्रसृत्वरभ्रमरनिरन्तरे पुरे ॥ ५८ ॥

निशाचरावथ शुकसारणाभिधा-
    वुपागतौ निशिचरनाथशासनात् ।
अनीकिनीमज[illegible]
    वनौकसामनुकृतनानराकृती ॥ ५९ ॥

विभीषणादधिगततत्प्रवृत्तिभि-
र्नियम्य तैर्नृपसविधं प्रवेशितौ ।
विमोचितावधिकरुणेन तेन ता-
वुपेत्य तं दशमुखमेवमूचतुः ॥ ६० ॥

दुरासदा मनुजपतेरहो चमू-
श्चमूरुदृग्जनकसुता विसृज्यताम् ।
न चेद्विभो! स खलु विभीषणं विना
विनाशयेन्महदपि रक्षसां कुलम् ॥ ६१ ॥

तिष्ठन्तु क्वचिदिह लक्षकोटिसङ्ख्या
सङ्ख्याताः कथमपि ते कपिप्रवीराः ।
ओघैर्ये परिगणिता अदूरविंशै-
रावाभ्यां कथमितरेण ते गणेयाः ६२ ॥

श्रुत्वेदं दशवदनः कुतूहलेन
प्रासादं गिरिवरतुङ्गमारुरोह ।
तौ चास्मै विमतबलं प्रदर्शयन्ता-
वब्रूतां पुनरपि पार्श्वयोर्निषण्णौ ॥ ६३ ॥

अयं रामः श्यामच्छविरविकलाभोगमधुरो
निगूढाहङ्कारो निरतिशयगम्भीरहृदयः ।
स्वयं धीरोदात्तप्रकृतिरभिगम्यश्च सुधियां
धृताकारो वीरो रस इव तवाग्रे निवसति ॥ ६४ ॥

एतस्मै रचिताञ्जलिः पुनरसौ धीरोद्धतो लक्ष्मणः
सुग्रीवोऽयममुष्य पादयुगलं संवाहयन् वर्तते ।
तिष्ठत्येष महाबलः स हनुमाञ्ज्यायानयं जाम्बवान्
लङ्काधीश! विभीषणोऽयमनुजो यस्ते समस्तेजसा ॥ ६५ ॥

इत्यर्धोक्तावसहनतया शत्रुश्लाघौ भवन्तौ
शत्रुस्तोत्रैरलमलमिति ध्वंसितौ तेन चारौ ।
विद्युज्जिह्वं किमपि वदता कर्णजाहे जगाहे
तच्चोद्यानं जनकतनयालङ्कृतं रावणेन ॥ ६६ ॥

यदा सीतां गत्वा सुमुखि! स मया लक्ष्मणसखो
हतो रामः कामं मम सफलयेत्यालपदसौ ।
तदा विद्युज्जिह्वः समुपहृतवांस्तत्र शिरसी
तयोर्मायाक्लृप्ते विशिखधनुषी चास्रकपिशे ॥ ६७ ॥

हा नाथेति क्षितिनिपतितां मुक्तकण्ठं रुदित्वा
संमूर्छन्तीं मुहुरथ समाश्वासयन्ती नितान्तम् ।
मायेयं भो! निशिचरपतेरक्षतौ वीक्षितौ ता-
वित्थं वाचा सपदि सरमा मोदयामास सीताम् ॥ ६८ ॥

गते तु दशकन्धरे दशरथस्य पुत्रावुभौ
सुवेलकटके स्थितावविरतस्फुरत्तेजसौ ।
ददर्श जनकात्मजा सरमया दिवं प्रापिता
कदाचिदुदयाचले रविविधू समेताविव ॥ ६९ ॥

इति श्रीरामपाणिवादविरचिते राघवीये महाकाव्ये
षोडशः सर्गः ।

---

## अथ सप्तदशः सर्गः ।

ततः समन्तान्नगरस्य रक्षां कर्तुं नियुञ्जानममात्यमुख्यान् ।
उपेत्य वंशस्य विवृद्धिमिच्छन् मातामहो रावणमित्यवादीत् ॥ १ ॥

निरुद्धदृष्टेस्तमसः प्रकर्षादर्थानदृष्टानभिदर्शयन्ती ।
कस्य प्रियायास्ति न दीपिकेव स्नेहानुवृद्धा खलु वृद्धवाणी ॥ २ ॥

वत्स! त्वयासावथवा नियत्या सन्त्याजितो वत्सविभीषणो यत् ।
तन्नः कुलं नो कथमम्बुराशेश्च्युतामृतस्यर्च्छतु तुल्यकक्ष्याम् ॥ ३ ॥

मनुष्यलोकादभयं मदान्धो यन्नावृणीथा वरदाद् विधातुः ।
तस्यैष पाकः कुलविप्लवार्थं विजृम्भते सम्प्रति किं ब्रवीमि ॥ ४ ॥

तत् कैकसीमात! कुलस्य भूत्यै सन्धत्स्व रामेण बलाधिकेन ।
अयं हि मित्रेष्विव शात्रवेष्वप्युपाश्रितः स्निह्यति दीनबन्धुः ॥ ५ ॥

जय्यः कथंकारमसौ नृसिंहो येनातिदुर्लङ्घतया प्रसिद्धः ।
बालेन वेशन्त इवाशु लोष्टैर्बद्धो न किं वारिधिरेप शैलैः ॥ ६ ॥

प्रवर्त्यमानं भवता जगत्यामधर्ममुच्छेत्तुमुदारचेताः ।
प्रवर्तते धार्मिक एष रामः सामैव नः साम्प्रतमत्र राजन्! ॥ ७ ॥

व्यनक्ति नैतत्किममुष्य साधोर्नयाम्बुधेराश्रितवत्सलत्वम् ।
यदागतः कूटनयाद्विपक्षाद्विभीषणोऽनेन किलाभिषिक्तः ॥ ८ ॥

प्रसीद राजञ्छिवतातिमिच्छोर्वर्षीयसो मे वचनं प्रगृह्णन् ।
रागादिदुष्टं हृदयं निगृह्णन् प्रदेहि रामाय विदेहकन्याम् ॥ ९ ॥

अधिश्रियश्चन्द्रिकयेव कीर्त्या चिराय पूर्णत्वमुपागतस्य ।
क्षयाय वंशस्य निशाचराणां मा भूत् सुधांशोरिव कृष्णपक्षः ॥ १० ॥

जराप्रलापोऽयमुत द्विषद्भिः कृतोपजापस्य तव प्रवादः ।
क्षमेऽत्र सर्वं गुरवो हि यूयमित्याक्षिपत् तद्वचनं दशास्यः ॥ ११ ॥

तदाज्ञया सैन्यपतिः प्रहस्तः प्राग्द्वारसंरक्षणमाततान ।
तथा महापार्श्वमहोदराभ्यामरक्ष्यवाची प्रतिहारभूमिः ॥ १२ ॥

द्वारि प्रतीच्यां प्रतिपक्षभीमस्तस्थौ धनुष्मानथ मेघनादः ।
तत्रोत्तरस्यां शुकसारणाभ्यां सार्धं स्वयं पङ्क्तिमुखेन तस्थे ॥ १३ ॥

ततो विरूपाक्षमदिक्षदाशु महारथं मध्यमगुल्मगुप्त्यै ।
इति व्यधत्त स्वपुरस्य रक्षामक्षामशक्तिप्रसरः स वीरः ॥ १४ ॥

विभीषणस्यानुचरैश्चतुर्भिर्लङ्कां विशद्भिर्धृतपक्षिरूपैः ।
ततो निवृत्तैरभिगुप्तिमस्या निवेदितो दाशरथिस्तदानीम् ॥ १५ ॥

तेनापि नीलं च तथाङ्गदं च वातात्मजं च क्रमशो नियुज्य ।
पूर्वादिभागत्रितयेऽथ शेषे सहानुजेन स्थितमात्मनैव ॥ १६ ॥

समं च सुग्रीवविभीषणाभ्यां सुवेलमध्यास्य सहानुजन्मा ।
हर्म्याग्रकुम्भोल्लिखिताम्बुवाहामालोकयामास पुरं स शत्रोः ॥१७॥

नीलाश्मवेश्मग्रकरादुदीर्णैर्नवाभ्रविभ्रान्तिकरैर्मयूखैः ।
यस्यामनर्त्यन्त घनात्ययेऽपि व्यामुक्तकेका वलभीमयूराः ॥ १८ ॥

मुक्तासरैर्यत्र च सप्तभूमप्रासादवातायनलम्बमानैः ।
अन्वक्रियन्ताचलभर्त्तुरग्राद्विनिष्पतन्तोऽम्बुकणा द्युसिन्धोः ॥

यत्रोपकार्यामणिपुत्रिकासु सुराङ्गनारूपविडम्बिनीषु ।
वन्दीग्रहः कौणपडिम्भलोकैरभ्यास्यताभ्याशविहारशीलैः ॥ २० ॥

अम्बूनि बिम्बागतपद्मरागप्राकाररोचिःस्फुटपाटलानि ।
अनारतं यामभितोऽम्बुराशेः सन्ध्याभ्रशोभां बिभरांबभूवुः ॥ २१ ॥

हेमाब्जिनीरेणुकणानुविद्धैराधूतमन्दारतरुप्रवालैः ।
अनुद्यतोद्यानसमीरपोतै रतिश्रमो यत्र नितम्बिनीनाम् ॥ २२ ॥

केलीशुकैरिन्द्रपुराङ्गनानां कारान्धकारालयसंयतानाम् ।
विलापवर्णाननुसंगृणद्भिर्यस्यामहास्यन्त नराश्रिशाटाः ॥ २३ ॥

तत्रोच्चकैरुत्तरगोपुराग्रे सहोपविष्टं शुकसारणाभ्याम् ।
विभीषणोद्दार्शितमीक्षते स्म क्षपाचरेन्द्रं कपिचक्रवर्त्ती ॥ २४ ॥

सरोषमुत्प्लुत्य तमभ्युपेतो मुष्ट्या जघानोरसि घोरया सः ।
स चैनमित्युत्कटसिंहनादं तयोरभूदुद्धतयोर्नियुद्धम् ॥ २५ ॥

अथाहवे तस्य पराजितस्य प्रसह्य हृत्वा मकुटान्यरातेः ।
प्रत्यागतस्तानि च भानुसूनुः पत्ये रघूणामुपदीचकार ॥ २६ ॥

कृतं त्वया भानव ! साहसिक्यं कर्मेदमित्थं ब्रुवतोऽथ भर्तुः ।
ममार्ज कोपेन समं सरागं मूर्ध्ना स पादाम्बुजयोः परागम् ॥ २७ ॥

जिज्ञासमानेन रिपोः स्थिरत्वं युयुत्सुनापि प्रभुणा नियुक्तः ।
अथाङ्गदस्तस्य समीपमेत्य सधैर्यसंरम्भमिदं बभाषे ॥ २८ ॥

आज्ञापयत्यम्बुनिधेर्नियन्ता खरान्तको रावण ! राघवस्त्वाम् ।
प्राणान्निजान् वा जनकात्मजां वा विहातुमद्यारभसे दुरात्मन् ! ॥२९॥

पक्षोऽयमाद्यः परिगृह्यते चेदुपेहि सज्जोऽस्मि गृहीतधन्वा ।
अथ द्वितीयस्तदलं विलम्ब्य क्षन्ताह एवाविनयं तवेति ॥ ३० ॥

अथावदत् पङ्क्तिमुखः सरोषं यदुद्धृतः सोऽपि कुबेरशैलः ।
नियन्त्रितो यच्च निलिम्पराजः को वास्तु तस्याविनयस्य सोढा ॥३१॥

रे मूढ! सर्वस्य स एव सोढा निर्धारितं तत्र न दारचौर्यम् ।
त्रातुं नतानप्रणतान् विनेतुं चान्योऽस्ति कोऽस्मादिति सोऽङ्गदोऽपि [॥ ३२ ॥

कः कोऽत्र भोः कद्वद एष कस्मान्निगृह्यतेऽद्यापि न कीशपाशः ।
इत्येनमाक्षिप्यति राक्षसेन्द्रे रक्षांसि पर्यावृणते स्म दूतम् ॥ ३३ ॥

सरत्निनिष्पेषविशीर्णगात्राण्यमूनि विद्राव्य महेन्द्रपौत्रः ।
रामं समभ्येत्य च वन्दमानो निवेदयामास यथानुभूतम् ॥ ३४ ॥

सलक्ष्मणः सोऽपि समाहितज्यं धनुः समास्फालयति स्म वीरः ।
तद्ध्वानमुद्ध्मापयति स्म दूरं प्लवङ्गहिकारवसन्निपातः ॥ ३५ ॥

ततः शिलापृष्ठकठोरवक्षोविक्षोभणक्षोभितसालचक्रम् ।
मुष्टिप्रहारप्रविदीर्णसौधं पादाभिघातापतितप्रघाणम् ॥ ३६ ॥

लाङ्गूलसंघूर्णितहर्म्यजालं कराग्रनिष्पेषितपुष्पवाटम् ।
स्थूलोपलाविद्धसरस्तटाकं महीरुहास्कन्दितचन्द्रशालम् ॥ ३७ ॥

सिंहारवास्फोटितकुम्भकर्णं समुद्धृतास्फालितवाजियूथम् ।
उन्मूलितोन्मर्दितकेलिशैलमुद्ध्वंसितारक्षिकराक्षसौघम् ॥ ३८ ॥

उद्घूर्णितस्वर्णमयोपकार्यं निर्मूलितोद्याननिकुञ्जपुञ्जम् ।
लङ्कापुरं कामपि नीयते स्म दुस्थामवस्थां प्लवगप्रवीरैः ॥ ३९ ॥

गन्धर्वहेषागजबृंहिताभ्यामभ्युच्छ्रितश्चापरवानुविद्धः ।
अथोज्जजृम्भे रजनीचराणां प्रस्थानभेरीपणवप्रणादः ॥ ४० ॥

घनैरिवामेचकभीमरूपैरजस्रचञ्चत्तरवारिधारैः ।
तटित्कडाराक्षतयातिरूक्षै रणाजिरं व्योमवदावृतं तैः ॥ ४१ ॥

ततो नखाश्मद्रुमशूलशैलप्रासासिशक्तिच्छुरिकाप्रहारम् ।
परस्पराक्षेपवचोविमिश्रं बभूव युद्धं कपिराक्षसानाम् ॥ ४२ ॥

रात्रिश्चरास्त्रप्रतिशीर्यमाणप्लवङ्गशस्त्रीकृतशैलरूपैः ।
करीन्द्रकर्णानिलधूयमानैस्तिरोहितं व्योमपरागपूरैः ॥ ४३ ॥

भल्लूकदोर्यन्त्रनिपीड्यमानक्रव्यादवक्त्रक्षरितैरसृग्भिः ।
उत्तालकेतुप्रविलम्बिनीनां शोभा हृता शोणपताकिकानाम् ॥ ४४ ॥

यदास्यगर्तापतितोत्तमाङ्गः प्लवङ्गमो यः समलोकि लोकैः ।
स एव तस्य क्षणदाचरस्य छित्वा नखैः कण्ठमितो निरागात् ॥ ४५ ॥

येन प्रमुक्तो विशिखो न यावन्निजं तरस्वानपि गात्रमाप ।
उत्प्लुत्य तावत् कपिराशरस्य तस्यैव पार्ष्णिग्रहणं चकार ॥ ४६ ॥

यातुप्रयुक्तामथ शक्तिमेको येनाद्रिणा यः सपदि व्यबाधात् ।
तच्छेदनोत्तेजितघोरधारा वक्षोऽलुनात् तस्य कपेः सुखं सा ॥ ४७ ॥

शिलीमुखः शातमुखो विपक्षात् परापतन्नेव वलीमुखेन ।
प्रकोष्ठघातेन निवर्तितः सन् प्रहर्तुरेवाच्छिनदुत्तमाङ्गम् ॥ ४८ ॥

शिलाप्रहारेण विपाट्यमानादिभस्य कुम्भादभिनिष्पतन्तीः ।
मुक्ताः सरक्ताः परितो विचिक्युः पतत्रिणो डाडिमबीजबुद्ध्या ॥ ४९ ॥

वीरा विसृज्य क्षतजापगायास्तोये शिवानन्दकरे शरीरम् ।
सुरस्रवन्त्या इव देवभूयं लब्ध्वा समध्यारुरुहुर्विमानान् ॥ ५० ॥

येभ्यस्त्रसित्वा स्वमपह्नुवानः कथञ्चिदध्यास्त दिवं पुरा यः ।
स तेभ्य एवास्थित राक्षसेभ्यः स्वःस्त्रीगणो वीरविपद्गतेभ्यः ॥ ५१ ॥

अहो अहंपूर्विकया गतानां वरान् वरीतुं सुरसुन्दरीणाम् ।
मञ्जूनि मञ्जीरझणत्कृतानि शब्दान्तराण्यन्तरयांबभूवुः ॥ ५२ ॥

आस्रासवास्वादमदोद्धताभिर्गेयाभिरग्रे कटपूतनाभिः ।
सम्भाव्यमानं कृतहस्ततालं बभौतमां तत्र कबन्धनृत्तम् ॥ ५३ ॥

अथाग्निकेतुप्रमुखो निजघ्ने रामेण रात्रिञ्चरवीरवर्गः ।
सौमित्रिणास्त्राहिवरामिषत्वं निन्ये विरूपाक्षनराशवीरः ॥ ५४ ॥

कृतोऽस्तचापो विरथोऽङ्गदेन तिरोहितः संयति मेघनादः ।
अन्यद् गृहीत्वा धनुरस्त्रवर्षैराच्छादयामास कपिं दिविष्ठः ॥ ५५ ॥

बबन्ध नागास्त्रवरेण रामं सहानुजं स द्रुतमस्त्रवेदी ।
बन्धः क्वचिद्बन्धमुक्तानपि स्यात् तमोनुदं जातु तमो हि रुन्धे ॥ ५६ ॥

हतौ वितस्तौ मनुजौ मयेति व्यजिज्ञपत् प्राप्य स रावणाय ।
स च प्रहृष्टः परिरभ्य पुत्रमन्वग्रहीदस्तु शिवं तवेति ॥ ५७ ॥

अतःपरं वत्स! विधित्स्यते किं मम प्रियं पुत्रवतां वरस्य ।
आरोपितैवाद्य चिराय सीता त्वया मदुत्सङ्गमसंशयं यत् ॥ ५८ ॥

प्रत्येतु पत्युर्विलयं विलोक्य स्वेनैव सेत्यादिशतोऽस्य दास्यः ।
अदर्शयन्नाशुगयन्त्रितौ तौ जगत्प्रवीरौ जनकात्मजायै ॥ ५९ ॥

यस्याः कृते हा भुवनस्य जीवो विपत्तिमद्यानुचितां प्रपन्नः ।
पापां सुवाना जनकात्मजां तां कथं न दीर्णासि वसुन्धरे! त्वम् ॥ ६० ॥

त्वमम्ब! कैकेयि! चिराय दिष्ट्या वर्धस्व राज्ञा भरतेन साकम् ।
यदेष मे सानुज आर्यपुत्रः क्षात्रेण धर्मेण दिवं प्रपन्नः ॥ ६१ ॥

हा नाथ! हा लक्ष्मण! हा हनूमन्! हा किं करिष्यामि कृपालपामि ।
इति प्रमूढामथ राजपुत्रीमाश्वासयत् तां त्रिजटा वचोभिः ॥ ६२ ॥

सुक्षात्रिये! देवि! जहीहि मोहं क रामभद्रः क शरः सुरारेः ।
लोकैकदीपस्य सहस्ररश्मेः किमन्धकारोऽलमपह्नवाय ॥ ६३ ॥

परामृशत्वेनमवन्ध्यभावादस्योदयायाशुगदेवतेयम् ।
तमोग्रहग्रस्तिरपि ग्रहाणां प्रभोर्हि पूर्वाभ्यधिकप्रसत्त्यै ॥ ६४ ॥

अव्याहतं देवि! तवापि भाग्यं वैधव्यमापादयितुं किमीष्टे ।
इत्यादि तस्या वचनं निशम्य क्षिप्रं विशश्वास विदेहकन्या ॥ ६५ ॥

नितान्तखिन्ने निवहे कपीनां विभीषणे चाप्रतिपत्तिमूढे ।
पक्षानिलाधूतपयोधिवीचिः क्षणादिवालक्ष्यत पक्षिराजः ॥ ६६ ॥

अथाङ्गमङ्गं परिमृज्य सद्यो भुजङ्गसंवेष्टनमाक्षिपन्तम् ।
निद्रामिव द्रागपनीय मूर्छामपश्यतां दाशरथी पुरस्तम् ॥ ६७ ॥

कस्त्वं सखे! यस्य तवानुषङ्गः पितुर्यथा मामधुना धिनोति ।
अस्त्येव जन्मान्तरसौहृदं नौ मनोऽनुबध्नाति यदद्य यावत् ॥ ६८ ॥

इत्थं कृतप्रश्नमजस्य पौत्रं प्रोचे विनीतो विनतातनूजः ।
यः कश्चिदेवाहमसौ सपक्षस्तवाहितापाय सदानुकूलः ॥ ६९ ॥

रात्रिंचरध्वंसविधेर्विधानादनन्तरं सिद्धसमस्तसाध्यम् ।
निजं पदं प्राप्तमथो भवन्तं स्वयं वदे राघव! साधयामि ॥ ७० ॥

इति प्रयाते पतगाधिराजे सन्नद्धयोः संयति दाशरथ्योः।
धनुर्ध्वनिः सैनिकसिंहनादैरनुद्रुतोऽतित्रसदाशरेन्द्रम् ॥ ७१ ॥

वत्सेन मिथ्या खलु हर्षितोऽहं यदक्षतावेव मनुष्यडिम्भौ।
इत्याशु धूम्राक्षमभिप्रयातुं स वज्रदंष्ट्रं च समादिदेश ॥ ७२ ॥

समग्रसैन्यौ समरे हरीणां बलानि बाणैरवचूर्णयन्तौ।
क्रमेण तौ वायुसुतोऽङ्गदश्च वैवस्वतप्राहुणिकीचकार ॥ ७३ ॥

अकम्पनाद्येष्वनिलात्मजादिभिर्निपातितेषु स्फुटरोषभीषणः।
अथ प्रहस्तोऽभिजगाम वानरीं चमूममूमाशरवाहिनीपतिः ॥ ७४ ॥

किरन्तं शरानापतन्तं हसन्तं हरीणां गणानर्दयन्तं नदन्तम्।
प्रहस्तं प्रहृत्य प्रहस्तेन नीलो विहस्तं चकार प्रशस्तप्रभावः ॥ ७५ ॥

सञ्चूर्णिताश्वरथसारथिचापबाण-
चर्मासिवर्मशरधिं गिरिणायुधेन।
साकं सुराधिपदुराधिभरेण वीर-
स्तं पावकिः स समरे शमयाञ्चकार ॥ ७६ ॥

इति विमतविभङ्गप्रक्रियासु प्रवीणै-
रविचलनिजसारैर्वानराणामनीकैः।
अविकलमुपजुष्टः कर्कशैस्तर्कतन्त्रैः
स्वयमिव निगमान्तो रामभद्रश्चकाशे ॥ ७७ ॥

इति श्रीरामपाणिवादविरचिते राघवीये महाकाव्ये
सप्तदशः सर्गः।

---

## अथाष्टादशः सर्गः।

सेनान्यामथ निहते श्रुते दशास्यो
हा हेति क्षणमिव मूर्च्छितः पतित्वा।
आश्वस्तो निरचिनुत स्वयं प्रयातुं
वीराणां विपदि विजृम्भते हि वीर्यम् ॥ १ ॥

उत्तालध्वजपटचुम्बिताम्बुवाहं
केङ्कारप्रतिभयचक्रचक्रवालम् ।
कुद्दालप्रतिमखुरैः खरैः सहस्रे-
णायुक्तं रथवरमारुरोह धीरः ॥ २ ॥

कोदण्डैः प्रलयघनस्वनप्रचण्ड-
ज्याघोषैरविकलसंहितास्त्रगर्भैः ।
आधूतैः परिघगदासिशक्तिशूल-
प्रासैश्च स्फुटदुरुदीर्घदोःसमूहः ॥ ३ ॥

आरक्तस्फुरदनलस्फुलिङ्गनेत्रै-
रावद्धभ्रुकुटिनिटालदुर्निरीक्षैः ।
साटोपप्रहसितसंप्रदष्टदंष्ट्रै-
र्वक्त्रैश्च प्रतिदिशमेव संमुखीनः ॥ ४ ॥

आदीप्रप्रकटकिरीटकुण्डलौघ-
प्रत्युप्तप्रतिनवपद्मरागभाभिः ।
सन्ध्याभ्रच्छविभिरिवाञ्जनाद्रिकूटा-
नारक्तान् दधदसिताङ्ग उत्तमाङ्गान् ॥ ५ ॥

पूर्णेन्दुद्युतिसितचामरातपत्र-
च्छायाभिः सकलदिशो विसर्पिणीभिः ।
स्वीयाभिर्भृशमिव कीर्त्तिभिः समिद्धः
सन्नद्धः स खलु रणाङ्गणं जगाहे ॥ ६ ॥

तस्योच्चैरभिहततूर्यभूरिभेरी-
निर्ह्रादप्रसरनिरुद्धदिक्तटीकैः ।
उद्दामद्विरदतुरङ्गमोत्तरङ्गै-
र्व्याप्ताभूद् धरणिरनीकिनीसमुद्रैः ॥ ७ ॥

आशीर्यन्मणिफणिराजमस्तकाग्र-
प्रभ्रश्यत्क्षितिकषणावदीर्णपृष्ठः ।
यद्भारं कमठपतिर्व्यसोढ कृच्छ्रा-
न्नासीरे स्म खलु रराज यातुराजः ॥ ८ ॥

आयान्तं तदनु विलोक्य दीप्यमानं
तेजोभिस्त्रिभुवनजिष्णुतोचितैस्तम् ।
अत्यर्थं बहुमनुते स्म रामभद्रः
शत्रुस्था अपि हि गुणा हरन्ति साधून् ॥ ९ ॥

तावच्च प्लवगकुलानि बाणवर्षैः
प्रत्याशं प्रविसृमरैर्विमर्दयन्तम् ।
अक्षिप्यद् दशवदनं प्रति प्ररुष्टः
सुग्रीवो विटपिसमग्रमद्रिशृङ्गम् ॥ १० ॥

तद्बाणैरमररिपुः स चूर्णयित्वा
कृत्वाथो किमपि शिलीमुखावलूनम् ।
सृष्ट्या द्रागुरसि निजे निजाग्निवासं
मुष्ट्यैव प्रतिहतवान् मरुत्तनूजम् ॥ ११ ॥

नृत्यन्तं तदनु रथस्य कूबराग्रे
केत्वग्रे धनुषि च लीलया स नीलम् ।
विव्याध ज्वलितमुखेन पावकास्त्रे-
णास्त्रज्ञेष्वतिलघवो ह्यनस्त्रवेदाः ॥ १२ ॥

उग्रोऽपि स्वसुत इति प्लवङ्गमं तं
वात्सल्यात् स्वयमनलो न बाधते स्म ।
चित्रं भोस्त्यजति न यत् किलाश्रयाशो-
ऽप्यन्यः को विभुरिदमुज्झितुं ममत्वम् ॥ १३ ॥

कल्पान्तप्रबलकृतान्तकल्पमग्रे
निर्व्यग्रप्रसरविकीर्णबाणजालम् ।
तं दृष्ट्वा दशमुखमाकुलाः पलाया-
मासुस्ते सपदि समन्ततः प्लवङ्गाः ॥ १४ ॥

रोषाग्निर्ज्वलति मनस्यनारतं मे
यस्तस्य प्रशमनमीप्सितं चिराय ।
अद्यायं रचयतु सायको ममेति
ज्यायांसं कृतनति लक्ष्मणो ययाचे ॥ १५ ॥

कामस्ते फलतु कुमार! किन्त्वराति-
दोर्लीलातुलितकुलाचलो दशास्यः ।
तन्मा भूत् तव तु कियानपि प्रमादो
गच्छेति प्रभुरपि चैनमन्वजानात् ॥ १६ ॥

विष्फाल्य क्वणितकरालकिङ्किणीकं
कोदण्डं दृढगुणकूणिताटनीकम् ।
सौमित्रिः शिततरपूरितेषुधिस्तं
निःशङ्कं निशिचरनाथमभ्ययासीत् ॥ १७ ॥

दिष्ट्या मे दशमुख! दृष्टिगोचरत्वं
प्राप्तस्त्वं न च खलु मुच्यसे दुरात्मन्! ।
सन्धेहि त्वरितमिषून् धनुःषु योद्धुं
सन्नद्धा वयमिति निर्भयस्तमूचे ॥ १ ॥

त्रस्यन्ति प्रथितबलस्य यस्य नाम
श्रुत्वापि त्रिदशगणाः सलोकपालाः ।
तस्याग्रे निवसति तापसो धनुष्मान्
ही हीदं समुचितमित्यहासि तेन ॥ १९ ॥

विष्फारध्वनिमनु कर्णजाहकृष्टा-
दुत्सृष्टैः सपदि धनुर्गुणाच्छरौघैः ।
आवेद्य स्वमिव चिकीर्षितं त्रजङ्घी
रुद्धाशामुखमभवत् तयोर्नियुद्धम् ॥ २० ॥

दिव्यास्त्रप्रचयविचित्रिते विवृद्धे
सङ्ग्रामे सभयविलोकिते दिविष्ठैः ।
चिच्छेद स्थिरमपि रावणस्य चापं
सौमित्रिः सुदृढगुणोज्ज्वलं यशश्च ॥ २१ ॥

आदत्तां मुदितवतः स्वयम्भुवः प्रा-
गुद्दीप्तां त्रिदशरिपुर्मुमोच शक्तिम् ।
आविद्धः सपदि तया स्तनान्तराले
भूपृष्ठे निपतितवान् विभोः कनीयान् ॥ २२ ॥

द्रागेनं तुलितकुबेरपर्वतैर-
प्युद्धर्तुं न खलु भुजैः शशाक शत्रुः ।
यद्वा कः पुनरिह शक्नुयादनन्तं
स्वं बुद्ध्वा यदयमशेत विश्वबीजम् ॥ २३ ॥

सद्यस्तं विमतमुपेत्य मुष्टिघाता-
दापात्य क्षतजमुचं विनष्टचेष्टम् ।
सौमित्रेरधृत तनूमनूनसत्त्वः
स त्वस्याप्यनुमतिबृंहितो हनूमान् ॥ २४ ॥

तेनाथ प्रभुसविधं प्रणीयमानात्
सा शक्तिः स्वयममुतो निवर्तते स्म ।
निःशल्यो यदयमभूत् तदा हृदन्ते
क्रव्यादां पतिरभिभस्तदेव शल्यम् ॥ २५ ॥

तं भूयोऽप्यखिलवलीमुखानखण्डैः
शस्त्रौघैर्विदधतमाशु कान्दिशीकान् ।
आसाद्य स्फुटतररोषपाटलाक्षः
साक्षेपं वचनमुवाच रामभद्रः ॥ २६ ॥

तिष्ठ त्वं कुटिलमते! कियच्चिरं त्वां
कर्तारं प्रतिमुहुरागसामुपेक्षे ।
त्वत्कण्ठक्षतजपिपासुराशुगोऽसा-
वुत्कण्ठां त्यजतु समीहितार्थलाभात् ॥ २७ ॥

कुर्वाणः कनकमये मृगे मृगव्या-
मव्याजं परिचितकूटलक्ष्यभेदः ।
काठिन्यप्रलघितशैलसालिवक्षो-
विक्षोभादनितरसारसादरोऽयम् ॥ २८ ॥

विद्वेषिच्छिदुरतयास्त्रवीरपाणा-
न्मद्बाणादवितरि कुत्र तिष्ठसे त्वम् ।
दोर्दर्पश्वयथुरयं भिषज्यते नै-
वाद्यापि प्रशममहौषधेन यस्मात् ॥ २९ ॥

त्रातुं त्वां प्रभवति नैव वज्रपाणि-
नैवासावपि भगवान् पिनाकपाणिः ।
नाप्युच्चैरसुररिपुः स चक्रपाणि-
र्बाणेभ्यो मम कुमते! कुतस्ततोऽन्यः ॥ ३० ॥

प्रत्यूचे दशवदनः कृतं कृतं भो
मर्त्यानामधम! विकत्थनैस्तवैभिः ।
यः शत्रून् क्षपयितुमात्मना न शक्त-
स्त्रातारं स खलु परं परं वृणीते ॥ ३१ ॥

यत्पातावधि खलु जीवितं जनानां
कुण्ठोऽभूद् यदुरसि सोऽपि कालदण्डः ।
वज्रं च स्फुरदरपङ्क्ति वज्रपाणे-
स्तत्रैव प्रतिनवपुष्पकल्पमासीत् ॥ ३२ ॥

त्वं मन्ये मनुज! किमीदृशप्रतापं
लङ्केशं तमपि रणे विजेष्यसेऽहम् ।
हंहो धिङ् मृगशिशुरेष केसरीन्द्रा-
दात्मानं बलिनमवैति पश्यतेदम् ॥ ३३ ॥

इत्युक्त्वा निशितमुखाः शिलीमुखा ये
तेनास्ता रघुपतिना तु ते निरस्ताः ।
बाणौघैः श्रुतिपरिशीलनप्रवृत्तै-
र्दुस्तर्का इव विदुषा गिरां प्रपञ्चैः ॥ ३४ ॥

आरूढस्तदनु हनूमतोंसपीठं
बभ्राजे वलयितचापमण्डलस्थः ।
विष्वद्र्यक् सपदि किरञ्छरोस्रजालं
स श्रीमानचरममंशुमानिवाद्रिम् ॥ ३५ ॥

ज्याघोषस्तनितमुचोर्मिथो जिगीष्वो-
रिष्वोघं प्रविकिरतोः पयोविकारम् ।
उद्दाम्नोः प्रलयपयोमुचोरिवाभू-
दिक्ष्वाकुप्रवररक्षसोः समीकम् ॥ ३६ ॥

नीरन्ध्रे नभसि परस्परांसपार्श्व-
व्यामर्दस्फुटितविलम्बिताङ्गदानाम्।
औत्सुक्यादनुमिलतां नभश्चराणां
दिक्कुञ्जान् मुखरयति स्म साधुवादः॥ ३७॥

धूतेन प्रतिमुहुरक्षसूत्रबन्ध-
प्रध्वंसग्लपितजटाकुलेन मूर्ध्ना।
शश्लाघे रणमथ रामरावणीयं
हर्षाश्रुस्नपितमुखेन नारदेन॥ ३८॥

उन्नद्धो यशस इवाधिरोहवंशो
रामेण त्रिदशरिपोर्ध्वजो विलूनः।
अन्यायः पतनफलो महारथेन
व्यूढस्याप्ययमिति दर्शयन्नपप्तत्॥ ३९॥

नीरथ्यं दलितरथं निकृत्तसूतं
निःसैन्यं त्रुटितकिरीटमस्तचापम्।
निष्ठ्यूतक्षतजशरीरमात्रशेषं
त्रस्यन्तं दशवदनं जगाद रामः॥ ४०॥

दोष्णां ते दमितसुरासुरोरगाणां
प्रीताः स्मो वयमपि वीर! वीर्यभूम्ना।
सोढा यत्तव विशिखाः शिखावदुग्रा
धीरेणाप्यहह मया कथञ्चिदेवम्॥ ४१॥

रक्तानुग्रहपरया स्त्रियेव पत्न्या
श्रान्तोऽसि व्रणितशरीरया युधा त्वम्।
विश्राम्य त्वरितमुपेत्य राजधानीं
सन्नद्धः पुनरभियास्यसि प्रवीर!॥ ४२॥

आरूढो रथवरमप्रमत्तरथ्यं
बिभ्राणो धनुरपि सज्यमस्तखेदः।
आयातस्त्वमपि निशाचरेन्द्र! पश्चाद्
दुर्वारं मम भुजसारमीक्षितासे॥ ४३॥

 

इत्युक्तो मकुटभरं विनापि नम्रा-
ण्याबिभ्रत् स खलु मुखान्यपत्रपिष्णुः ।
विच्छायः कपिभिरुदीक्षितः सहासं
प्राविक्षत् कथमपि रावणोऽथ लङ्काम् ॥ ४४ ॥

सा वाणी रुचिरतमापि शत्रुवक्त्रा-
दुद्भूता विषलहरीव तं ददाह ।
कुक्षिस्थं तिमिरमपाकरोति या सा-
प्यौर्वाग्नेर्द्युतिरतिदुःसहैव सिन्धोः ॥ ४५ ॥

आत्मानं प्रकृतिगभीरया स बुद्ध्या
बुद्ध्वा द्राङ् मनुजशराद् विपत्स्यमानम् ।
सिंहाङ्कं विपुलमलञ्चकार मञ्चं
प्रोत्क्षिप्तप्रतिधृतचारुचन्द्रहासः ॥ ४६ ॥

हे धीराः! कुणपभुजः! स कुम्भकर्णो
निद्राणः सपदि विबोध्यतां भवद्भिः ।
येन श्वो मनुजवटू निघानितारा-
वित्थं तान् बहुमतिपूर्वमादिदेश ॥ ४७ ॥

अच्छिन्नश्वसितसमीरदुष्प्रवेशा-
माविक्षन् कथमपि ते गुहां गभीराम् ।
यत्रोच्चैरपर इवाञ्जनक्षितीन्द्रः
शेते स्म स्वपनरतः स कुम्भकर्णः ॥ ४८ ॥

गर्जद्भिः पटहरवं प्रवर्तयद्भिः
शैलौघानुरसि घने विनिक्षिपद्भिः ।
सिञ्चद्भिर्घटशतहारितैः पयोभिः
प्रत्यङ्गं फणिनिकरेण दंशयद्भिः ॥ ४९ ॥

मातङ्गैरपि च वपुर्विलोठयद्भि-
स्तप्तायःपरिघशतेन ताडयद्भिः ।
पापिष्ठः शमनभटैरिवातिरुष्टै-
स्तैः कृच्छ्रादथ स विबोधयांबभूवे ॥ ५० ॥

व्यादत्तप्रकटकरालवक्त्ररन्ध्रं
व्याजृम्भ्य स्फुटरवमुद्धताट्टहासः ।
आजग्धैः स हि बहुखाद्यपेयचूष्य-
राहार्यैरधिगततृप्तिरभ्युदस्थात् ॥ ५१ ॥

यूपाक्षादवगतदैवदुर्विपाकं
ज्यायांसं त्वरितमुपेत्य वन्दमानः ।
मा भैषीर्निशिचरनाथ! भक्षयाम-
स्तौ मर्त्याविति विनिवेद्य स प्रतस्थे ॥ ५२ ॥

आयान्तं गगनसमुच्छ्रितोत्तमाङ्गं
व्याक्षिप्तत्रिदशविमानमिद्धमानम् ।
पीनोरस्तटपरिकृष्टतोयदौघं
प्लायन्त प्लवगभटास्तमीक्षमाणाः ॥ ५३ ॥

ते केचिन्महति निलिल्यिरेऽद्रिकुक्षौ
सन्त्रस्ताः सलिलनिधावमांक्षुरन्ये ।
सन्तेरुः कतिचन सेतुना समुद्रं
शैलाग्राण्यधिरुरुहुः परे तरूंश्च ॥ ५४ ॥

द्राघीयस्तरभुजदण्डमार्गलग्ना-
नाविघ्नानघसदमूनमूढसत्त्वः ।
नर्दन्तं मुहुरचलं क्षिपन्तमग्रे
चक्रे स प्रतिहतसंज्ञमङ्गदं च ॥ ५५ ॥

शूलं यद् दशशतलोहभाररूपं
तेना [illegible] रविसुतमासदन्न यावत् ।
तावत् [illegible] झटिति समुत्पतन् गृहीत्वा
व्य [illegible]भाङ्क्षीत् तृणमिव जानुना हनूमान् ॥ ५६ ॥

संरम्भी दशवदनानुजो नियुद्धे
निस्संज्ञं निपतितमीश्वरं कपीनाम् ।

---

१. 'तं' क. पाठः.

हस्ताभ्यामुरसि समुद्धरन्नविक्षत्
पौरस्त्रीमलयजचर्चितः स लङ्काम् ॥ ५७ ॥

सोऽपि द्राङ् नियतिबलेन लब्धसंज्ञो
विज्ञाय स्वमपि रिपोर्भुजान्तरस्थम् ।
आलूय श्रुतियुगमस्य नासिकां च
स्वैस्तीक्ष्णैर्नखरदनैस्ततो निरागात् ॥ ५८ ॥

विच्छिन्नश्रुतिपुटघोणशोणितार्द्रं
क्रोधान्धं स्वपरबलानि जक्षतं तम् ।
आयान्तं करधृतमुद्गरं कृतान्त-
श्रीभाजं न्यरुधदथो रघुप्रवीरः ॥ ५९ ॥

दोर्दण्डौ पृथगभिनत् पृथक् च पादौ
मूर्धानं पृथगतुलं पृथक् च शेषम् ।
इत्येवं स खलु समाक्षिपद् धरण्यां
येनैषा किल तिलशो न शीर्यते स्म ॥ ६० ॥

स्वर्यातं तदनु निशम्य कुम्भकर्णं
लङ्केन्द्रः सपदि स मोमुहांबभूव ।
निष्पुण्यं कषति विधिः समूलकाषं
प्रायेण द्रुममिव नीरसं कृशानुः ॥ ६१ ॥

हे देवान्तक! सनरान्तकत्रिमूर्धो
युध्यस्व प्लवगबलेन सातिकायः ।
इत्येतान् पुनरपरांश्च कांश्चिदुग्रा-
नादिक्षत् स तु समराय लब्धसंज्ञः ॥ ६२ ॥

सन्नद्धानभिपततोऽपि सम्प्रहारे
जघ्नुस्तानमितबला हनूमदाद्याः ।
रुन्धानानपि जगदेतदन्धकारान्
द्वित्रा हि द्युमणिकरा विनाशयन्ति ॥ ६३ ॥

आदेशं पितुरधिगम्य चापपाणि-
र्दृप्ताभिः समभियुतो वरूथिनीभिः ।

१. 'दशनै' इ. पाठः

उद्गीतत्रिदिवजयः स वन्दिवृन्दै-
र्युद्धाय प्रतिचलति स्म मेघनादः ॥ ६४ ॥

मायावी स खलु नभस्तले निलीय
ब्रह्मास्त्रादभिसृमरैः शरैरसङ्ख्यैः ।
प्रायेण प्लवगकुलानि तानि सर्वा-
ण्याचूडप्रदलितविग्रहाण्यहिंसीत् ॥ ६५ ॥

तद्बाणै रघुसुतयोरशेषशोच्यां
निश्चेष्टां प्रगमितयोस्तयोरवस्थाम् ।
शोकाग्निक्षपितधृतौ विभीषणे च
प्रम्लानत्विषि च शुचा सुपर्वलोके ॥ ६६ ॥

आजह्रे सपदि स जाम्बवन्नियोगाद्
द्रोणाद्रिः पवनसुतेन शैलराजात् ।
यद्वायुः परिचलितौषधिद्रुमस्तौ
सेनाभिः सह समजीवयन्नृवीरौ ॥ ६७ ॥

मानान्धो दशवदनो वहूपचक्रे
क्लान्तस्य प्लवगकुलस्य यत्किलासौ ।
स्वानब्धौ यदि न मृतानपातयिष्यत्
प्राणिष्यंस्तदवसरे पलाशिनोऽपि ॥ ६८ ॥

सुग्रीवे हतवति कुम्भमाञ्जनेये
चोदग्रस्फुटभुजशालिनं निकुम्भम् ।
ऐक्ष्वाको युधि मकराक्षमम्बुजाक्षः
स्वर्गस्त्रीकुचकलशातिथिं चकार ॥ ६९ ॥

निर्गच्छन् द्रुतमथ रावणिः प्रतीचा
द्वारेण स्फुरदसिचापबाणतूणिः ।
हा रामेत्यभिरुदतीं निधाय माया-
वैदेहीमधिरथमैक्षतान्तरिक्षे ॥ ७० ॥

केशे तामवनिरजोङ्किते गृहीत्वा
खड्गेन द्रुतमवलूय चाधिकण्ठम् ।

तत्रान्तर्दधदभिचारघोरकर्म-
प्रारम्भी स खलु निकुम्भिलामयासीत् ॥ ७१ ॥

वार्त्तां तामनिलसुतान्निशम्य हा हा
देवीति प्रलपितपूर्वमात्तमोहः ।
रामोऽथ त्वरितमुपेयुषा कृतोऽभूत्
तत्त्वज्ञो विपुलहृदा विभीषणेन ॥ ७२ ॥

अथ रघुतनयानुमोदितं
कवचनिषङ्गिणमात्तकार्मुकम् ।
सह कपिनिवहेन लक्ष्मणं
स खलु निनाय कृती निकुम्भिलाम् ॥ ७३ ॥

स च विशिखविदारिताशरः
शरनिकराचितवेदिमण्डलाम् ।
हुतकुणपसमिद्धपावका-
मतिरभसेन विवेश तां गुहाम् ॥ ७४ ॥

अवदितरुरुमांसहावकः
कटुतरराक्षसमन्त्रपाठकः ।
अविचलधृतिरत्र रावणिः
परिददृशे पुरतः स दीक्षितः ॥ ७५ ॥

अविघ्नाभिनिष्पन्न एवेन्द्रशत्रो-
रमित्रादभीतिं किलाधित्सते यः ।
मखः सोऽधिमध्यं विजघ्ने प्लवङ्गै-
र्हविर्भक्षयद्भिर्द्विपो भर्त्सयद्भिः ॥ ७६ ॥

कुपितेन तेन परिगृह्णता धनुः
किरता शरानुरगभोगभीषणान् ।
समरं व्यधायि समरंहसा दशा-
ननसूनुनाथ रघुसूनुना समम् ॥ ७७ ॥

रणे घनधनुर्ध्वनावनिशकर्णपूरायित-
स्थिरोरुगुणनिःसरच्छरनिरुद्धदिङ्मण्डले ।

